॥ नमः शिवाभ्याम् ॥

# वातुल शुद्धागमः

( व्याख्यासमलङ्कृतः )

## तत्त्वभेदपटलः– प्रथमः

[ शिवनमस्कारात्मकमङ्गलाचरणम् ]

[1]वन्दे शङ्करमात्ममाद्य[2]ममलं तेजोनिधिं शाश्वतं

---

### व्याख्यानम्

[ शिवाय शुद्धतत्त्वाय पञ्चसादाख्यरूपिणे ।
नमो महेशरूपाय पञ्चविंशतिमूर्तये ॥
शिव-साद-स्वलीलाभिः एकत्रिंशत्स्वरूपिणे ।
ज्योतिर्लिङ्गस्वरूपाय मूलस्तम्भाय ते नमः ॥

कामिकादिवातुलान्ताः शिवागमाः अष्टाविंशतिः । तत्र वातुलागमसारभूतोऽयं वातुल शुद्धाख्यः शैवागमग्रन्थः ॥

ग्रन्थोऽयं तत्त्वभेदादिमन्त्रकीलान्तदशपटलात्मकः । तत्रेदं मङ्गलं– वन्दे इति । अत्र–वन्दे इति उत्तमपुरुषप्रयोगात् अहमिति कर्तृलाभः । शङ्करं अहं वन्दे इति सम्बन्धः ।

---

(1) इदं मङ्गलपद्यं क. ग. घ. च. छ. ट. ठ. ढ. त. थ. द. ध. पुस्तकेष्वेव दृश्यते ।

(2) मात्म– क. मध्य– ग. च. छ द. ढ.

शं करोतीति व्युत्पत्त्या नमस्कार्यस्य शङ्करस्य मङ्गलकारकत्वं प्रतीयते। मङ्गलकारकश्च शम्भुर्भवति; स्वयं मङ्गलरूपत्वात्। शङ्करं पुनः कीदृशमित्याकांक्षायामाह–**आप्तमिति**। आप्तो हि यथार्थवक्ता। शङ्करश्चायं तादृशः। ईश्वरोक्तागमेषु प्रामाण्यग्राहणायेदं विशेषणम्। शङ्करो हि लोकहितायैव प्रवर्तते। अतः तदुक्ताः आगमाः परमप्रमाणभूताः इति विशेषणस्य तात्पर्यम्।

पुनः कीदृशमित्याकांक्षायामाह – **आद्यमिति**। आदौ सर्वजगदुत्पत्तेः पूर्वमेव, भवं सर्वजगत्कारणत्वेन वर्तमानम्। अनेन विशेषणेन शङ्करस्य जगत्कारणत्वं सूच्यते; कार्यनियतपूर्ववर्तिन एव कारणत्वात्। लोकेऽपि तथैव दर्शनात्। तदुक्तम्—

"लिङ्गे सर्वं समुत्पन्नं लयस्तत्रैव चोच्यते।"
"लिङ्गे तु जायते तत्र जगत् स्थावरजङ्गमम्"॥[1]

इति।

पुनः शङ्करं विशिनष्टि– **अमलमिति**। न विद्यते मलं आणवादिकं अस्येत्यमलः। तं, आणवादिमलरहितम्।

एवं शङ्करस्य सर्वविधदोषराहित्ये सिद्धे तत्स्वरूपजिज्ञासायामाह – **तेजोनिधिमिति**। तेजसां निधिः आकरः तम्। तेजःपुञ्जमित्यर्थः। सूर्यादीनां सर्वेषामपि तेजःप्रदत्वात् अयं तेजोनिधिः भवति।

"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।[2]

इति श्रुतेः।

(1) (वातुले शैवपरिभाषा पुटः– 40) O.R.I. Mysore
(2) मुण्डकोपनिषत्– २. २. १०.

बिन्दुक्षोभकरं परात्परतरं नादात्मकं बीजिनम् ।[1]
सर्वान्तस्स्थमनेकलोकजनकं सोमं जगत्प्रेरकं

---

ईदृशतेजःपुञ्जस्यापि अपायशङ्कायामाह— शाश्वतमिति । शाश्वतं भूतभविष्यद्वर्तमानकालेषु देशाद्यपरिच्छेदेन भवं वर्तमानमित्यर्थः ।

"अजो नित्यः शाश्वतोऽयं पुराणः ।"[2] इत्यादिश्रुतेः ।

**बिन्दुक्षोभकरमिति** । बिन्दुर्नाम–भगवतः शिवस्य शक्तिः परा । अयं च बिन्दुः सूक्ष्मशिवतत्त्वात् जायते । शिवः स्वशक्त्या नादाद्युत्पत्त्यै तं बिन्दुं क्षोभयति इति बिन्दुक्षोभकरो भवति ।

**परात्परतरं** इत्यनेन उत्कृष्टादपि उत्कृष्टतरत्वेनाभिधीयते । अनेन निरतिशयोत्कर्षः उक्तो भवति ।

"**महतो महीयान्** ।"[3] इति श्रुतेः ।

**नादात्मकमित्यनेन** पराशक्तेः सकाशात् जायमाननादरूपतयाऽपि शङ्करो विशेष्यते । **बीजिनमित्यनेन** वर्णात्मकबीजाक्षरयुक्तं शिवचक्र-मुच्यते । तस्य शिवरूपत्वात् बीजाक्षरविशिष्टतया शङ्करः बीजी भवति । तं बीजिनमित्यर्थः ।

**सर्वान्तस्स्थमिति** । **सर्वेषां**– चराचरात्मकजगतां अन्तः प्रविश्य अन्तर्यामितया, स्थं वर्तमानमित्यर्थः ।

---

(1) बीजनम्– क. ग. च छ. ट. ठ. त. द. ध.
(2) कठो– २.
(3) त. उ. ". २.

लिङ्गस्थं बहुमन्त्रमन्त्रितमहालिङ्गं लयाख्यं ध्रुवम् ॥ १ ॥

---

**अनेकलोकजनकम्** । अनेकेषां चतुर्दशानामपि **लोकानां** भुवनानां तत्रत्यजनानां च **जनकं**–जनयितारम् ।

"लोकस्तु भुवने जने।"[1] इत्यमरः ।

ननु केवलस्य शङ्करस्य कथं सर्वलोकजनकत्वम् ? इत्यत्राह–**सोममिति** । उमया सह वर्तते इति सोमः; तम् । उमाख्यजगन्मातृस्थानीयशक्तिसहितं इत्यर्थः ।

**जगत्प्रेरकम्** । केवलोऽपि शङ्करः स्वकीयशक्त्या स्वसृष्टं जगत् तत्तत्फलाय तत्तत्कर्मणि प्रेरयतीति शङ्करः स्वसृष्टजगतः प्रेरकोऽपि भवतीत्यर्थः ।

पुनः शङ्करस्य स्वरूपविशेषमाह- **लिङ्गस्थमिति** । लिङ्गात्मना तिष्ठतीति लिङ्गस्थः, तम् । लिङ्गरूपमित्यर्थः ।

**बहुमन्त्रमन्त्रितमहालिङ्गम्** । पञ्चाक्षरादिनानाप्रकारमहामन्त्रैः **मन्त्रितं** मन्त्रविषयीकृतम् । तादृशं **महालिङ्गं** महालिङ्गस्वरूपम् ।

**लयाख्यं** स्वसृष्टानां सर्वेषां लयं प्रत्याधारत्वात् लयः इति अभिधीयमानमित्यर्थः ।

**ध्रुवम्** कूटस्थमित्यमित्यर्थः । स्वसृष्टस्य सर्वस्यापि जगतः स्वस्मिन् लीयमानत्वेऽपि स्वयं निर्विकारतया नित्य एव वर्तते इति भावः ॥ १ ॥]

---

(1) लिङ्गानुशासनम्- ३. ना.

यद् ब्रह्म[1] प्रवदन्ति दिव्यमतयः सर्वान्तरस्थं शिवम्
यस्माज्जातमनेकतत्त्वनिचयं[2] यस्मिन् पुनर्लीयते ।
येनेदं प्रविचित्रितं[3] बहुविधं[4] विश्वं जगत् स्थीयते
तत् तत्त्वं सततं भजेऽमृतमयं तेजोमयं चिन्मयम् ॥[5] २ ॥

---

[ **दिव्यमतयः** लोकोत्तरशिवतत्त्वज्ञानिनः, **सर्वान्तरस्थं** सर्वचराचर-जगदन्तर्यामितया वर्तमानम्, **शिवं** शिवतत्त्वम्, **यत् ब्रह्म** सर्वव्यापकं ब्रह्मस्वरूपं, **प्रवदन्ति** प्रकर्षेण ब्रुवते; **यस्मात्** ब्रह्मस्वरूपशिवतत्त्वसकाशात्, **अनेकतत्त्वनिचयं** अनेकानि तत्त्वानि शिवादीनि पृथिव्यन्तानि तत्त्वानि, तेषां निचयं तत्त्वनिचयात्मकं **जगत्** प्रपञ्चः **जातं** उत्पद्यते, तच्च तत्त्वनिचयात्मकं जगत् **यस्मिन्** ब्रह्मस्वरूपशिवतत्त्वे **पुनः** पश्चात् प्रलये, **लीयते** लयं गच्छति; विद्यमानकालेऽपि **इदं** परिदृश्यमानं जगत्, **येन** ब्रह्मरूपशिवतत्त्वेन **बहुविधं** नानाप्रकारं **प्रविचित्रितं** प्रकर्षातिशयेन चित्रीकृतं सत्, **स्थीयते** स्थितिं भजते; **तत् अमृतमयं** अमृतस्वरूपम् **तेजोमयं** तेजःपुञ्जस्वरूपम्, **चिन्मयं** ज्ञानघनस्वरूपं तत्तत्त्वं ब्रह्मरूपं शिवतत्त्वम्, **सततं** निरन्तरं, **भजे** सेवे इत्यर्थः ॥

अत्र **यस्मादित्यादिना स्थीयते** इत्यन्तेन शिवतत्त्वस्य जगत्सृष्टि-स्थितिलयकारणत्वं तटस्थलक्षणम्, **अमृतमयमित्यादिना चिन्मयमित्यन्तेन** स्वरूपलक्षणं चोक्तं भवति ॥ ]

---

(1) यं ब्रह्म – थ.
(2) मनेकनिचयं तत्त्वं – ब.
(3) प्र.तेचिश्रितम् – क.
(4) बहुतरम् – क. ब.
(5) इदं च मङ्गलपद्यं – क. थ. ब पुस्तकेष्वेव दृश्यते ।

[ शिवसंनिधौ स्कन्दोपस्थितिः ]

[1]कैलासशिखरे रम्ये नानारत्नोपशोभिते ।[2]

---

शिवं शिवकरीं[3] शक्तिं सदेशं च मनोन्मनीम् ।
ईश्वरीं[4] तत्सखीं गौरीं वन्दे विघ्नेश्वरं गुहम्[5] ॥

सुविशुद्धान् गुरून् नत्वा शुद्धविद्या[6]प्रबोधकान् ।
सम्यक् शुद्धाख्यतन्त्रेण व्याख्यास्ये तत्त्वतः स्फुटम् ॥

**कैलासशिखर इति। नानारत्नोपशोभिते** मणि-मुक्ता-प्रवाल-वैडूर्य-स्फटिक-मरकत-पुष्यराग-वज्र-गोमेधाभिधानरत्नैः, पुरुषरत्नैः विष्ण्वादिभिः, स्त्रीरत्नैः इन्दिरादिभिः, देवरत्नैः इन्द्रादिभिः, ऋषिरत्नैः वसिष्ठादिभिः, गायकरत्नैः तुम्बुरुनारदादिभिः, नाटक-[नटी] रत्नैः रम्भादिभिः, वादकरत्नैः भरताचार्यादिभिः, गणरत्नैः नन्द्यादिभिः, तेजोरत्नैः सूर्यादिभिः, आयुधरत्नैः पिनाकादिभिश्च, उपशोभिते समीपे शोभिते; कर्मसाम्यतः मलपरिपाकवशात् आगतशक्तिपातच्युतसंसारतृष्णानिःश्रेयसाभिमुखतः प्राप्ति-प्रापक-गुर्वन्वेषणानन्तरागत दीक्षादिना परमोक्षसिद्धि-स्वस्वाधिकारनिर्वर्तननिमित्तसेवापरैः समीपवर्तिभिः **शोभिते** ;

---

(1) "कैलासे"त्यारभ्य 'वद मे प्रभो' इत्यन्तो ग्रन्थः—क.घ छ ट ठ.ढ.त. द.ब. पुस्तकेषु नोपलभ्यते ।
(2) रत्नविराजिते – .
(3) शिवङ्करीं – फ.
(4) ईश्वरं – फ.
(5) शुभम् – ज.
(6) यथा विद्या – फ.

**नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ २ ॥**

---

**नानाद्रुमलताकीर्णे** मन्दार-सन्तान-पारिजात-हरिचन्दन-चम्पक-पाटल-पनस-आम्र-नालिकेर क्रमुक-ताल-हिन्ताल-बकुल-लिकुचादिवृक्षैः जाती-माधवी-यूथिकादिलताभिश्च कीर्णे सङ्कुले ;

तत्रतत्रस्थित-**नानापुष्पोपशोभिते** सात्विक-राजस-तामस-कालोचित-स्वर्णसितासितवर्णैः जलस्थलसम्भवैः **पुष्पैः उपशोभिते,** उप समीपे पुष्पोपहारार्थं वनदेवताभिः स्वकरार्पित-पुष्पबलिभिश्च **शोभिते** ; अलङ्कृते ; एवंभूते **कैलासशिखरे** रजताद्रौ । भूधराणां स्वर्णवर्णादिवर्णानां तामस-राजस-स्वरूपत्वात् सात्विकरूपे पर्वते विद्यमाने सतीति शेषः ।

शतकोटिप्रविस्तार[1]तलातलादिसप्तपाताल भूलोकाद्यर्ध्व[2]सप्तलोक[3]ब्रह्माण्डमध्यवर्ति-लक्षादिद्विगुण-विस्तीर्णजम्ब्वादिसप्तद्वीप-लवणादि-सप्तोदधि-मेरुमन्दरादि-पर्वत-नीलश्वेतादिसीमान्त-गिरिवरसहितभूलोकजम्बूद्वीप-लवणोदध्युत्तरनवसहस्र-योजनान्तवर्ति[4]द्विसहस्रविस्तीर्ण-दशसहस्रोच्छ्रित-हिमवत्समीपवर्ति[5]पञ्चाशत्सहस्रयोजनोन्नतभूधरे इत्यर्थः ।

**रम्यशब्देन** नातिशीतोष्णे इत्यर्थः ॥ २ ॥

---

(1) प्रविस्तारि–ज.

(2) दूर्ध्वे ज.

(3) सत्यलोक – ज.

(4) योजनान्तं – ज. वर्ती ज. (पा).

(5) वर्ती न. (पा).

तत्र सिंहासनासीनं श्रीकण्ठं[1] त्रिदशेश्वरम् ।
प्रणम्य चरणौ तस्य स्कन्दो वचनमब्रवीत् ॥ ४ ॥

[ शिवं प्रति स्कन्दपरिप्रश्नः ]

देवदेव जगन्नाथ सर्वज्ञ त्रिपुरान्तक ।
[2]स्थित्युत्पत्तिलयेशान प्रणतार्तिहर प्रभो ॥ ५ ॥

---

तत्र—तस्मिन् कैलासशिखरे, सिंहासनासीनं धर्म-ज्ञान-वैराग्यैश्वर्यात्मकसिंहपादाकारपादुकाभिः विराजमानभद्रपीठे स्थितम्[3] जगद्रक्षणव्यापारेणाधिष्ठितम्, त्रिदशेश्वरं त्रिदशानां देवानाम्, ईश्वरम्-सृष्टिस्थित्यधिकारि[4]ब्रह्मविष्णवोः आचार्यम्, श्रीकण्ठं गुणतत्वाधिष्ठितमन्त्रमहेश्वरम्[5]। दृष्ट्वेति शेषः। तस्य-परमेश्वरस्य, चरणौ भोगमोक्षकरौ पादौ, प्रणम्य - प्रह्वीभूय । स्कन्दः-षडाननः, वचनं अब्रवीत् लोकसंरक्षणार्थं विज्ञापितवान् ॥

देवदेवेति। देवाः-रुद्रादित्यवस्वश्विन्यभिधानाः त्रयस्त्रिंशत्कोटयः, तेषां देवः कर्ता, तस्य सम्बुद्धिः ।

जगच्छब्देन कालाग्न्यादि[6]भुवनानि उच्यन्ते ; तेषां कर्तृत्वात् जगन्नाथः इत्युच्यते । तस्य संबुद्धिः ।

---

(1) मृकण्डुं – प.
(2) इदमर्धं ड. पुस्तके नास्ति ।
(3) विराजमानं तादृशपीठस्थितम् – ज.
(4) त्यधिकार – फ. टी. ।
(5) मन्त्रमन्त्रेश्वरम् – ज.
(6) कालान्त्यादि – ज.

सर्वज्ञ चिदावारकावृतिशून्यत्वात् यथादर्शितचिदचिदात्मकप्रपञ्च ।[1]

त्रिपुरान्तक रविचन्द्ररथाङ्गश्रुतिवाजिहिरण्यगर्भयन्तृरथनगेन्द्र[2]चाप-वाताहारीशज्यावायुकृष्णाग्निबाणजन्याङ्गः सन् ब्रह्माण्डावर्तिसमस्तचतुर्विध[3] योनिबाधकपुरत्रयाणि संहृतवानिति 'त्रिपुरान्तक' इत्यामन्त्र्यते ।

स्थित्युत्पत्तिलयेशान आत्मनां अनाद्यावारकावृतानां परिपाकार्थं प्रवृत्तोद्युक्तशक्त्यात्मकव्यापारेण[4]मायाकार्यतनुकरणभुवनस्थितिं च तैस्तत्त्वादिभि-र्योजनं च तेभ्यो विश्लिष्टं च करोतीति स्थित्युत्पत्तिलयेशानेत्यर्थः । प्रणतार्तिहर कर्मसाम्यमलपरिपाकशक्तिपातागत[5]गुरुवरमुखश्रुतस्व[6]भुक्तिमुक्त्यर्थं[7]प्रण-तानां ईश्वरस्य प्रह्वीभूतानां, ईश्वरस्य स्वतन्त्रत्वात्[8]स्वस्य अपकर्षतां व्यवस्थाप-यतांम्, आर्तिं मलमायाकर्मभिरागतसंसारबाधां हरतीति प्रणतार्तिहरः इत्युच्यते । तस्य सम्बुद्धिः । **प्रभो !** सर्वेश्वर ! इत्यर्थः ।

---

(1) त्मप्रपञ्च- ज.

(2) यन्तृभूधरनगेन्द्र- ज

(3) चतुर्दशविध् - फ. टी.

(4) अनाद्यावारकप्रतीतानां व्यापारेण – ज.

(5) पातादागत – फ. टी.

(6) मुखश्रुतस्वतन्त्रतया- ज.

(7) स्वस्य- फ टी.

(8) मुक्त्यर्थं मलपरिपाकार्थं प्रवृत्तो क्तशक्त्यात्मकव्यावृत्यर्थं-ज.

[1]सर्वलोकहितार्थाय योगिनां रक्षणाय च ।
मन्त्रं तन्त्रं पुरा देव[2] ! त्वया प्रोक्तं तु विस्तरात् ॥ ६ ॥

---

हे देव ! त्वया मन्त्रं तन्त्रं पुरा प्रोक्तं इति सम्बन्धः । **सर्वलोकहितार्थाय** समस्तजगतां[3] दुःखमूलमलध्वंसनेन परभोगमुक्ति[4]रूपहिताय इष्टप्राप्त्यर्थं च **योगिनां** सुरसरस्सालाख्यमहीरुहशाखावलग्नफलरसास्वाद[5]लोलुपमर्कटवत् विविधशब्दादिविषयसुखास्वादनलोलुपचित्तप्रवृत्तिनिमित्तवायुना सहस्रदलाम्बुजे चित्तस्थितिं कुर्वतां इत्यर्थः । **रक्षणाय** च मन्त्रलयराजयोगेषु[6] च मन्त्रयोगिनां मन्त्रात्मकशिवस्वरूपदर्शनार्थं च , **मन्त्रं** आणव-शांभव-शाक्तभेदेन अनेकविधम् ; **तन्त्रं** च कामिकाद्यष्टाविंशतिभेदभिन्नम् , **पुरा** सृष्टिकाले **त्वया** श्रीकण्ठाभिधानलक्ष्मस्थानाभिव्यक्तेन परशिवेन, **प्रोक्तं तु विस्तरात्** शिवरुद्रभेदेन दशाष्टादशभेदतः प्रणवाद्यानां श्रवणधारास्वादामृतोपमत्वेन पूरितं तद्विस्तारं अनेकशतकल्पायुर्भिः श्रवणधारणयोग्यं[7] अल्पायुषां[8] अल्पबुद्धीनां अशक्यमित्यर्थः ॥ ६ ॥

---

1. पद्यमिदं ङ पुस्तके न दृश्यते ।
2. मन्त्रं तन्त्रं पुरा देव– ज. झ.
   मन्त्रतन्त्रक्रियारूपं– ध.
   मन्त्रं तन्त्रं महादेव ख. ज.
(3.) समस्तजनानां– फ. टी.
(4.) मूर्ति– ज.
(5.) स्वादन– सू. टी.
(6.) मन्त्रलयसंयोगेषु– ज. पा.
(7) धारयोग्यं– ज
(8.) कल्पायुषां– ज

पुंसां अनुग्रहार्थाय ज्ञानिनां मुक्तिकारणम् ।
शिवज्ञानं परं गुह्यं संक्षेपाद्वद मे प्रभो ॥ ७ ॥

[शिवेन वातुलतन्त्रसारोपदेशप्रतिज्ञा]

ईश्वर उवाच–

अथातः संप्रवक्ष्यामि यत् त्वया परिचोदितम् ।
तत्सर्वं हि समासेन[1] श्रूयतामिह[2] षण्मुख ॥

---

हे प्रभो सर्वेश्वर स्वतन्त्र ! इत्यवबोधने तस्मात् पुंसां अनुग्रहार्थाय पुंस्त्वमलयोगिनां सकलानामित्यर्थः । अनुग्रहार्थाय मलपरिपाकविशेषेण परापरभोगमोक्षसिद्ध्यर्थं च, ज्ञानिनां विज्ञानकेवलिनां[3] मुक्तिकारणम् अधिकार मलनिवृत्यर्थं च परं इतरदर्शनात्[4] श्रेष्ठफलदम्, गुह्यं मलपरिपाकहीनानां श्रुतमपि अश्रुतप्रायम्, शिवज्ञानम् शिवादिवस्तुप्रकाशकशास्त्रम, संक्षेपात् मनुष्यादिश्रवणधारणयोग्यम्[5], अतिविस्तरशास्त्रश्रवणेन यत् ज्ञानं सिद्ध्यति तत्समस्तप्रकाशकमित्यथः; मे श्रोतुकामाय मह्यम्, वद अनुगृह्णीष्व ॥

हे षण्मुख ! हे सुब्रह्मण्य ! श्रूयतामिति संबन्धः । अथ अनन्तरं अष्टाविंशतिसंहितोक्त्यनन्तरम्, अतः यस्मात् ताभिः संहिताभिः शिवादिवस्तुज्ञानं असमर्थं ततः तस्मात्, यत् शिवज्ञानम्[6], त्वया परिचोदितम्

---

(1) महासेन– फ.
(2) मपि – क. ग. घ. च. छ. झ. ट. ठ. ड. ढ. न. थ. द. ध. प. ब. भ. पुस्तकेष्वेव दृश्यते ।
(3) विज्ञाने केवलानाम्– ज.
(4) इतरदर्शिनाम्– फ. टी.
(5) श्रवणयोग्यतासिद्ध्यर्थं– ज.
(6) यत् विज्ञानम्– ज.

(ग्रन्थोपयोग- स्वरूप -परिमाणानि)

साधकानां हितार्थाय भुक्तिमुक्तिप्रदायकम्[1]
वातुलाख्ये[2] महातन्त्रे दध्नो घृतमिवोद्धृतम्[3] ।।

---

षण्मुखेनैव त्वया मां प्रति उत्थापितम्, सर्वं तत् इह अस्मिन् ग्रन्थे समासेन संग्रहेण सम्प्रवक्ष्यामि युक्तियुक्तं वदामि, श्रूयताम् इत्यवबोधितवान् ॥

**साधकानां** समयादिदीक्षोत्तरकालप्रदिपादितशिवपूजाद्यनुष्ठानवताम्, **हितार्थाय** तत्तदनुष्ठानविधानेन[4] हितकरणाय,[5] **भुक्तिमुक्तिप्रदायकम्** यथावदनुष्ठितचर्याक्रियावतां भोगमोक्षप्रदायकम् ।

**भोगः**[6] परापरभेदेन द्विविधः।पञ्चाष्टकरुद्रभुवनाधिपत्यं अपरभोगः । विद्येश्वरादिपदप्राप्तिः परभोगः । **मुक्तिरपि** द्विधा- परापरभेदेन । सालोक्यादि पदात्मकनिवृत्त्यादिभुवनप्राप्तिः अपरमोक्षः । तदनु भोगेन्द्रियभुवनोपादान मायामहामायातीतशिवसमानसर्वज्ञतादि[7]गुणप्राप्तिरेव परा मुक्तिः[8] । तयोः सिध्यर्थमितिभावः ॥

**वातुलाख्ये** अष्टाविंशत्यागमानां वातुलाभिधानरौद्रभेदे कामिक-योगज चिन्त्य-कारण-अजितदीप्त-सूक्ष्म-सहस्र-अंशुमत्-सुप्रभेदभेदेन दशधा भिन्नं

---

(1) प्रदाय च- ज.
(2) वातुलाख्ये- क. घ. च. त. ढ.
(3) नवनीतमिवोध्दृतम् क. घ. छ. ट. ठ. ड. ढ. त. द. ब.
(4) ष्ठानकथनेन - ज
(5) कारणाय च- ज
(6) भोगस्तु- ज.
(7) सर्वज्ञ्यादि- ज.
(8) परमुक्तिः प. टी.

सारात्सारं समुद्धृत्य शुद्धाख्यं तन्त्रमुत्तमम्[1] ।
सहस्रग्रन्थसंयुक्तं सर्वज्ञानसमुच्चयम् ॥ १० ॥

---

शिवागमभेदम्, विजय-निःश्वास-स्वायंभुव-अनल-वीर-रौरव-मकुट-विमल-चन्द्र-ज्ञानबिम्बप्रोद्गीत-ललित-सिद्ध-सन्तान-शर्वोक्त-पारमेश्वर-किरण-वातुलभेदेन अष्टादशधाभिन्नं रौद्रागमभेदं च तन्त्रम् । एवंभूताष्टाविंशतिविधागम[3]मध्ये वातुलाख्ये महातन्त्रे त्रिपदार्थचतुष्पादयुक्ते महत्प्रयोजिते विपुलार्थानुप्रवेशोनोक्तत्वात् तन्त्रं शिवज्ञानं वक्ष्यते इति सम्बन्धः । दध्नः क्षीरविकारात् घृतमिव आज्यमिव[4]उद्धृतं उत्थापितम् ॥

सारात्सारं सर्ववस्तुषु सारांशोऽस्तीति तस्मात् अस्यागमस्य इतरदर्शनानां सिद्धान्तकथनमेव सारम् । तत्सिद्धान्तादपि तत्प्रणीतं तथाविधदेवतानां अतीत-परशिवादिवस्त्ववबोधकत्वात् सारात्सारत्वं यथातथा समुद्धृत्य शुद्धाख्यं अनावृत्तिशून्यत्वात् शुद्धशिवतत्त्वाख्यं[4] तन्त्रम् विपुलार्थदर्शकम्, उत्तमं मोक्षसाधकत्वात् उत्तमफलसाधकमित्यर्थः । सहस्रग्रन्थसंयुक्तं दशशतग्रन्थसंयुक्तम्, सर्वज्ञानसमुच्चयम् - सकलावबोधरूपं संप्रवक्ष्यामीति संबन्धः ॥

---

(1) मन्त्रमु मम्- छ.
तन्त्रसंज्ञकम्- क. ग. छ. ट. ठ. ड,
तन्त्रसंज्ञिकम्- त. द. ढ. प. ब.

(2) ष्टादशागम- ज.

(3) आयुरिव- फ. टी. भ. टी.

(4) तत्त्वस्यासंख्यम्- ज.

गुह्याद्गुह्यमिदं तन्त्रं सर्वशास्त्रसमुद्धृतम्[1] ।
सूक्ष्मात् सूक्ष्मतरं सूक्ष्मं[3] सारात्सारं महोदयम् ॥ ११ ॥
अप्रकाश्यमिदं तन्त्रं रहस्यमतिदुर्लभम्[4] ।
शिवज्ञानं महासेन[5]! संक्षेपात् वक्ष्यतेऽधुना ॥

---

गुह्याद्गुह्यं गोपनीयादपि गोपनीयम्, इदं तन्त्रं इदानीं वक्ष्यमाणम् शास्त्रम्, सर्वशास्त्रसमुद्धृतम् कामिकाद्यष्टाविंशतितन्त्राविरोधेन प्रतिपादितम्, सूक्ष्मात्सूक्ष्मतरं सूक्ष्मं नाम अनुमानादिना साध्यम्, तस्मात् त्रिपदार्थज्ञानमेव सूक्ष्मं, तस्यापि सूक्ष्मम् प्रतिपदार्थं प्रमाणातीतगोचरत्वात्; तत्त्स्वरूपकथनरूपत्वात् अस्यापि सूक्ष्मतरत्वम् । सूक्ष्मं सङ्ग्रहरूपम्, सारात्सारं शक्त्योद्यक्तप्रवृत्तदशासु प्रवृत्तोद्युक्तप्रतिपादकं सारम् , ताभ्यां शक्तिस्वरूपप्रतिपादकमेव सारात्सारम् । महोदयम् महोदयं नामैश्वर्यं मुक्तिपदार्थग्रहणद्रविणं च भवतीत्यर्थः ॥ ११ ॥

हे महासेन एवंभूतं शिवज्ञानं संक्षेपात् वक्ष्यते इति संबन्धः । अप्रकाश्यं प्रकाशयितुं योग्यं प्रकाश्कम् तन्न भवतीत्यप्रकाश्यम् । शिवादिशुद्ध-

---

(1) समुच्चयम् – क. ख. (पा). घ. च. छ. त. द. ठ. ड, ढ. प. ब.
समन्वितम् – ध.
(2) इत आरभ्य अतिदुर्लभं इत्यन्तं 'फ' पुस्तके नास्ति.
(3) तरं चैव– ज. झ. फ. भ.
(4) रहस्यं परदुर्लभम्– ज,
गुह्यं परमदुर्लभम् – थ. द. ध.
(5) ज्ञानमहातन्त्रं– क. घ. छ ट. ठ. ड. ढ. द. प. ध.

[1][ वातुलतन्त्रविषयानुक्रमः ]

[1]शिवस्य पुरुषाख्यस्य दर्शनं शृणु षण्मुख ।
प्रथमः तत्त्वभेदश्च[2] द्वितीयो वर्णभेदकः ॥ १३ ॥

---

वस्तुज्ञानविमुखानामिति शेषः। इदं तन्त्रं शुद्धाख्यया निर्दिष्टम्, शास्त्रं रहस्यं मोक्षाभिलाषिणां विविक्तस्थानां उपदेष्टुं योग्यम्, अतिदुर्लभं ममताऽहन्तादि-कारणमूर्छावृतानां आत्मनां अतीव न साध्यम्, शिवज्ञानं शिवादिबोधकं शास्त्रम् अधुना इदानीं संक्षेपात् संग्रहेण, मया वक्ष्यते अभिधीयते ॥१२॥

हे षण्मुख ! हे षडानन ! पुरुषाख्यस्य पुरुषपदाभिधेयस्य शिवस्य शिवाख्यतत्त्वस्य दर्शनं तत्त्वभेदादिबोधकं इदं शुद्धाख्यतन्त्रम् शृणु अवधारय । अस्मिन्[3] शास्त्रे प्रतिपाद्यानां[4] वस्तूनां भेदादि श्लोकत्रयेणोच्यते[5] ।

एतेषां दशभेदानां प्रथमः पूर्वं तत्त्वभेदः, शिवभेदः ।

[ तत्त्वपदार्थः ]

अनाद्यनन्तानामात्मनां चिदावारकानेकशक्तियुक्तस्याणवमलस्यावारकत्वं यस्य यदा यावन्मात्रं निवर्तते तस्य यद्योक्तव्यं तद्धेतुभूतभुवनशरीरेन्द्रियोपादानात्मक-शुद्धाशुद्धमायादिकर्तृत्वेऽपि अस्याविकारत्वात् तत्त्वशब्देन कथितमित्यर्थः ।

( पटलानां सङ्गतिक्रमविशिष्टत्वम् )

तत्त्वस्य शिवस्य भेदस्तु- निष्फल-सकलनिष्कल-सकलत्वेन त्रिरूपः इत्यर्थः । वर्णादिभेदं विहाय प्रथमतः तत्त्वभेदकथने किं नियामकमित्युक्ते, वर्णादि-

---

(1) पद्यार्धमिदं 'क' पुस्तके न दृश्यते ।
(2) प्रथमं तत्वभेदं तु- ग. ज. प.
(3) तस्मिन्- ज.
(4) प्रतिपादितानां- ज.
(5) भेदादि दशविधशास्त्रेणोच्यते- ज.

तृतीयश्चक्रभेदश्च[1] चतुर्थो वर्गभेदकः[2] ।
पञ्चमो मन्त्रभेदस्तु[3] षष्ठः प्रणव उच्यते[4] ॥ १८ ॥

---

भेदानां शिवभेदज्ञानस्य अङ्गत्वात् अङ्गिनः शिवभेदस्य भेदः प्रथमत एव वक्तुं युज्यते ।

**द्वितीयो वर्णभेदकः** चक्रादिभेदानां निमित्तकारणस्य वर्णस्य भेदः द्वितीयः । शिवभेदकथनानन्तरं वक्तुं योग्यः इत्यर्थः ॥ १३ ॥

**तृतीयश्चक्रभेदश्च** चक्रस्य यन्त्रस्य भेदः । कार्यकारणयोरभेदोपचारान् मन्त्राकारत्वेन लिखिताक्षराणां भेदस्वरूपः तृतीयः, वर्णभेदोक्त्यनन्तरं वक्तुं योग्यः ।

**चतुर्थो वर्गभेदकः** । मन्त्रभे(दस्य)दात् पूर्वमेव वर्गभेदोक्त्यभावे मन्त्रस्योद्धरणं न सम्भवति । तस्मात् मन्त्रभेदस्याग्रे वर्गभेदः । सात्त्विकादिवर्गत्वेन अक्षराणि व्यवह्रियन्ते ।

**पञ्चमो मन्त्रभेदस्तु** वर्णादिभेदानन्तरमेव मन्त्रजननस्य योग्यत्वात् वर्गोक्त्यनन्तरम् मन्त्रभेदः । शुद्धमूलतत्त्वाद्यात्मरूपत्वेन भिन्नं मन्त्ररूपमुच्यते ॥ १४ ॥

---

(1) तृतीयं चक्रभेदं तु – ग. च. ज.
(2) चतुर्थं वर्गभेदकम् – ग. च. ज.
(3) पञ्चमं मन्त्रभेदं तु – क. ग. च. ज.
(4) ष प्रणवमुच्यते क. ग. च. ज.

सप्तमो ब्रह्मभेदः स्यात् अङ्गभेदस्तु चाष्टमः ।
नवमो मन्त्रजातं तु दशमः कीलमुच्यते ॥ १५ ॥
एते वै दशभेदास्तु[1] कीर्तिताश्च[2] क्रमेण वै[3] ॥

---

षष्ठः प्रणव उच्यते । ब्रह्मभेदानां ईशानतत्पुरुषाघोरवामदेवसद्योजातमन्त्राणां प्रणवाङ्गरूप अकारोकारमकारबिन्दुनादेभ्यः उद्भवत्वात् ब्रह्मभेदकथनस्याग्रे प्रणवभेद उच्यते । तदुक्तम्– " सद्यश्चाष्टकला ज्ञेयाः अकाराक्षरसम्भवाः" ॥ इति ॥

सप्तमो ब्रह्मभेदः स्यात् । अङ्गभेदात्पूर्वं ब्रह्मणां मूर्धादिप्रधानस्थानोपयोगिनां भेदं स्वरूपं वक्तुं युज्यते इति कृत्वा ब्रह्मभेदं वदामीति ।

अङ्गभेदस्तु चाष्टमः । अङ्गानां शिवाङ्ग भूताङ्ग-विद्याङ्ग-कूटाङ्ग-शक्त्यङ्ग सामान्याङ्गानां भेदं एकैकस्य हृदादिब्रह्मभेदोक्त्यनन्तरं वदामि । ब्रह्मन्यासानन्तरं अङ्गन्यासस्य योग्यत्वादित्यर्थः ।

नवमो मन्त्रजातं तु । अङ्गभेदानन्तरं मन्त्रजातं वक्तुं शक्यते ।

---

(1) सप्तमं ब्रह्मभेदं स्यात्– क ग. च. ज. झ.
सप्तमे ब्रह्मभेदस्तु– रु ।
(2) अङ्गभेदस्तथाष्टकम्– ग. च. ज.
(3) नवमं क. ग. घ. च. छ ड. ढ.
(4) दशमं कीलकं तथा क ग घ. च. छ ड ढ.
(5) एतानि दशभेदानि ग. च ज.
(6) कीर्तितानि – ग च. ज
(7) क्रमेण तु क. ग. च छ. ज. ट. ठ. ड. ढ. त. थ.

[ तत्र प्रथमपटलार्थाभिधानप्रतिज्ञा ]

एतेषामेव पूर्वं तु तत्त्वभेदं वदाम्यहम् ।। १६ ।।

[ तत्त्वस्य त्रेधा विभागः, तेषां लक्षणं च ]

तत्त्वं तु[1] त्रिविधं ज्ञेयं तस्य भेदं शृणुष्व च[2] ।
शिवः[3] सदाशिवश्चैव[4] महेशश्च[5] त्रिधा स्मृतम् ।।[6] १७ ।।

---

दशमः कीलमुच्यते । मन्त्राणां जन्मभूमिरिदं कीलमिति कीलभेदं वदामि ।। १५ ।।

एते वै दशभेदास्तु । प्रागुक्ताः तत्त्वभेदादिभेदाः दशधा भिद्यन्ते । ते क्रमेण वै यथाक्रममेव, कीर्तिताश्च वर्गशः प्रोक्ताः । पूर्वोक्त-दशविधानां भेदानां आद्यः तत्त्वभेदः शिवस्य निष्कलादिभेदः वक्ष्यते–एतेषामिति । एतेषामेव तत्त्वादिभेदानां पूर्वं तु प्रथमतः तत्त्वभेदं शिवभेदं अहं वदामि ।। १६ ।।

तत्त्वं तु त्रिविधं ज्ञेयं शिवस्तु त्रिविधो भवेत् (इति ज्ञेयः) । तस्य भेदं त्रिविधस्यापि भेदं शृणुष्व च ।। श्रूयतामिति सुब्रह्मण्यमवहितं करोति । (तत्त्वं) शिवसदाशिवमहेश्वरत्वेन त्रिविधं भवेदित्याह– शिव इत्यादिना । (शिवतत्त्वं)

---

(1.) च– भ.
(2.) हि– च.
(3.) शिवं– क. छ. ट. ठ. ड ढ. त. थ. द. ध. प. ब.
(4.) सदाशिवे चैव क. छ ट ठ ड. ढ. थ. ध.
(5.) महेशं– ख. घ. छं. ठ. ड. ढ. त. थ. ध. प. ब
(6.) स्मृत:– ग. घ. च. छ. ज. झ.

शिवतत्त्वं महासेन ! निष्कलं त्विति[1] कीर्तितम् ।
सकलो निष्कलश्चैव[2] सदाशिव इहोच्यते[3] ॥ १८ ॥

---

शिवः सदाशिवः महेशः इति उद्देशक्रमतः त्रिधा त्रिप्रकारं स्मृतं ज्ञेयं भवति ॥ १७ ॥

शिवादीनामुद्दिष्टक्रमेण सामान्यलक्षणमुच्यते शिवतत्त्वमित्यादिना । हे महासेन हे षण्मुख शिवतत्त्वं निष्कलं ; कलाशब्देन अवयवः उच्यते, सोऽस्य नास्तीति निष्कलमिति कीर्तितम् इत्यभिहितम् ।

[ शिवतत्त्वस्य निष्कलत्वोपपत्तिः ]

शुद्धाशुद्धभोगसाधनतनूकरणाद्युपसंहृत्य स्वस्वकारणलीनं कृत्वा यदा तत्कारणात्मकं मुकुलितशक्तिवृन्दं सत् परानपेक्षं भवति, तदा निष्कलमेव शिवतत्त्वमित्युच्यते । तदुक्तं पौष्करे—

शक्तोऽयं शक्तयो यस्मात् योगादिक्रियया च्युता ।
शिव एवावतिष्ठन्ते निष्कलश्च स एव तु ॥ इति ॥

भोगकारिकायामपि—

" न कलादिकला पिण्डः सम्बन्धोऽसौ यथा पशुः ।
कदाचिदपि देवेशः तस्माद्गीतस्तु निष्कलः "॥ इति ॥

---

(1) लश्चेति- भ लं तत्र- फ.
(2) सकलं निष्कलं चैव- क. ख. ग. घ. च. छ. ज. झ.
(3) सादाख्यमिति चोच्यते- ग. च. ज. झ फ. भ.

सिद्धान्तसारावल्यामपि –

"परानपेक्षं शिवसंज्ञमस्य ।" इति ।

श्रीमन्मृगेन्द्रेऽपि –

" भोगसाधनमाक्षिप्य कृत्वा करणसंश्रितम् ।
तच्च सात्त्विक[1]माक्रम्य विश्रमायावतिष्ठते ॥ "इति॥

[ सदाशिवतत्त्वस्य सकलनिष्कलत्वोपपादनम् ]

इदानीं सदाशिवस्वरूपं निरूप्यते– **सकल इत्यादिना**। सकलो निष्कलश्चैव सदाशिवः। सदाशिवस्तु सकलो निष्कलश्चेति इहोच्यते इहाभिधीयते ॥

संहतौ सुप्ते जीवानां मलविशेषाभावतः मोक्षासंभवात् तदर्थं प्रागार्जितानेकपुण्यापुण्यात्मनां कर्मणां भुक्त्यर्थं तनुकरणादिसंसारैः आत्मवर्गं योक्तुमिच्छन् यदा सृष्टिनिकरे उपादानरूपबिन्दुमधितिष्ठति तदानीं सावयवोपयोगिबिन्दुमधितिष्ठति तदानीं सावयवोपयोगिबिन्द्वधिष्ठानविशेषात् सकलनिष्कलश्च भवति ।

तदुक्तं पौष्करे–

"उद्युक्तस्तु यदा कार्ये बिन्दुर्भोगद्वयं तदा ।
लभते शिव इत्युक्तः स एव तु सदाशिवः ॥

तत्त्वं तदेव सादाख्यं न शिवाद्वस्तुतो भिदा ॥"

इति ॥ २८ ॥

---

(1.) सात्मिक- फ.

**महेशं सकलं विद्यात्[1] त्रिविधास्ते भवन्ति वै ।**

[ त्रयाणामप्येषां तत्त्वानां अवान्तरभेदाः तेषां परिगणनं च ]

**शिवमेकं विजानीयात् सादाख्यं पञ्चधा भवेत् ॥ १९ ॥**

---

इदानीं महेशस्वरूपं निरूप्यते— **महेशमित्यादिना । महेशं** महेशात्मकं शिवतत्त्वं **सकलं** कलासहितं **विद्यात्** विजानीयात् । **ते वै** शिवतत्त्वभेदाः त्रिविधाः भवन्ति शिवः सदाशिवः महेशः इति त्रिप्रकाराः भवन्ति ।

[ महेशतत्त्वस्य सकलत्वम् , महेशतत्त्वस्य सकलत्वोपपत्तिश्च ]

**महेशं सकलं विद्यात् ।** बिन्दुमायोपादानजनिततनुकरणादिभिः आत्मना यदा शुद्धाशुद्धभोगं प्रयच्छति तदा शिवसंज्ञकः स एव भगवान् सकल इत्युच्यते ।

[ त्रिविधस्याप्यविकारत्वं ]

शक्त्योद्युक्तप्रवृत्तनिष्कल-सकलनिष्कल-सकलावस्थशिव-सदाशिव-महेश-भेदेषु अविकार एव शिवो भवति । अन्यथा शिवस्यापि संहृताद्यवस्थाभेदेषु असाकल्यादिविकारित्वं चेत् अस्मदादिवत् तनुकरणादिमान् स्यात् । तदपि निष्कर्मिणां न संभवति । कर्मापि न मलरहितानां सम्भवति । तस्मात्—

[ ईश्वरस्यापि ऐच्छिकविग्रहवत्वोपपत्तिः ]

शिवोऽपि त्वन्यत्रययोगी भवतीति चेन्न । शिवो हि अनादिसिद्ध-

---

[1] विन्द्यात् – ट. ठ. ड. त. द.

नित्य-निर्मल-सर्वार्थदृक्क्रिया-शक्तियुक्तत्वात् आत्मनां भोगमोक्षकरणाय इच्छा-विग्रहमङ्गीकरोति इत्युक्ते, तदिच्छाऽपि अयोग्यवस्तुनि न प्रवर्तते, ईश्वरस्य निर्मलत्वेऽपि विग्रहाङ्गीकरणे मुक्तशिवानामपि निर्हेतुकभेदशरीरादि संभवत्येव ।

[तत्त्वभेदस्यौपाधिकता]

तदुक्तम्—

"लयादिभेदः प्रागुक्तः यदुपाधौ शिवस्य तु ।
स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता ॥"

इति । अन्यत्र च—

"लयभोगाधिकरणात् न भेदो वास्तवः शिवे ।
किन्तु बिन्दोरणूनां च वास्तवा एव ते मताः ॥"

इति ॥

सिद्धान्तसारावल्यामपि—

" रूपं परापेक्षम् " इति ॥

[ ईश्वरास्तित्वस्यानुमानेन सिद्धिः ]

ननु ईश्वरास्तित्वे किं वा प्रमाणम् ? इत्युक्ते— प्रत्यक्षप्रमाणस्य तावत् नासौ गोचरः अतीन्द्रियत्वात् । आगमोऽपि तस्मिन् प्रमाणत्वेन न वर्तते । दर्शनान्तरतत्त्वाद्यसंभवात् । उपमानमपि न संभवति । सदृशवस्तुनोऽभावात् ।

तस्मात् अनुमानमेव प्रमाणं भवति । देहादिवस्तु कार्यत्वधर्मिकम्, सावयवत्वात् । यद्यत् सावयवं तत्तत्कार्यं विशिष्टकर्त्रविनाभावि, यथा बलभ्या-

दिकमिति। तस्मात् इद उर्वीपर्वतादिरूपं जगत् सोपादानादिज्ञानविशिष्टम् कर्तारं गमयति।

[ ईश्वरे सर्वकर्तृत्वसाधनम् ]

तस्मात् शिव एव कर्ता भवति। एवमुक्तेऽपि ईश्वरस्य सर्वकर्तृत्वं नास्ति। वलभ्यादीनां कर्त्रन्तरोत्पत्तिदर्शनात्। तत्रापि ईश्वरस्य कर्तृत्वे दृष्टान्ताभावः प्रसज्यते इति। तन्न ॥

कर्तृत्वं द्विविधम् सङ्कल्पात् करणादपि। शिवस्तु सङ्कल्पमात्रेण सर्वं जानाति करोति च। कुलालादयस्तु करणकर्तारः कुलालकर्तृविषयोऽपि शिवकर्तृक एव। शिवाधिष्ठितेन हि कुलालेन घटादिकं कर्तुं शक्यते। अन्यथा एकस्मिन् समये इन्द्रियविघातात् मनोऽनवस्थानात् घटादिचिकीर्षोरपि घटक्रिया न संभवति। तस्मात् न सर्वकर्तृत्वहानिः।

दृष्टान्तोऽपि भवति पक्षधर्मत्वेन महानसवत्। शिवस्य शक्त्या तस्मैव कारणेन ईश्वरः सर्वं जानाति करोति च।

[ शिवस्य चिद्घनस्वरूपत्वम् ]

ननु ईश्वरः किं शरीरी ? अशरीरी ? उत उभयरूपी ? अथ अनुभयरूपी शिवस्य अनुभयरूपत्वे शशविषाणप्रायो भवति। उभयरूपत्वे तु अन्योन्यविरुद्धधर्मद्वयाधिकरणत्वात् अनेकान्तवादो भवति। अशरीरत्वे शब्दमात्रमेवाङ्गीकरणीयम्। सशरीरत्वे, अस्मदादिवत् अनेकदेशस्य समकालक्रियमाणयागादिकर्तृसान्निध्यं न सम्भवति। सूर्यादिवत् तत्र तत्र

सान्निध्योपपत्तिरिति चेन्न; सूर्यादीनां सुप्रभास्वरत्वात् अत्युच्चतरस्थत्वमेव सान्निध्यम्। तद्वत् अस्मत्-दृष्टिगोचरोऽपि स्यात्।

शरीर सत्वे तदस्य शरीरं स्वनिर्मितं वा? परनिमितं वा? परनिर्मितत्त्वे तस्य ईश्वरत्वहानिः। स्वनिर्मितत्वे तत्सर्गकाले शरीरं अस्ति वा न वेत्याशङ्का भवति।

किञ्च– न बिन्दुमायाकार्यैः तन्वादिभिः निर्लेपत्वादेव शिवो बध्यते। तस्मात् चिद्घन एव शिवो ज्ञेयः॥

[ शिवस्य पञ्चवक्त्राद्याकारसिद्धिः ]

ननु पञ्चवक्त्राद्याकारत्वं कथ सिद्ध्यति? ध्यानपूजार्थमेव ह्याकारवत्त्वम्। पञ्चकृत्योपयोगिभिः ईशानादिभिरेव शक्तिभिः पञ्चवक्त्रमूर्धादिचरणान्तमूर्तिमत्त्वं सिद्धम्। तच्च उपचारादेव न वास्तवम्। तदुक्तं श्रीमन्मृगेन्द्रे–

"तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।
ईशतत्पुरुषाघोरवामजैः मस्तकादिकम्॥"

इति। पौष्करेऽपि–

" साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम्॥" इति

अन्यत्र च–

,'आकारवांश्चन्नियमादुपास्यः न वस्त्वनाकारमुपैति बुद्धिः'॥ इति॥

[a]महेशस्तु[1] महासेन ! पञ्चविंशतिभेदकः[2] ।

---

[ शिवस्य अशरीरित्वेऽपि स्रष्टृत्वादिसिद्धिः ]

ननु शरीरवांश्चेत् शरीरं सृजति नाशरीरी । तन्न । अशरीरित्वेऽपि आत्मनः स्वदेहस्पन्दादौ सामर्थ्यं दृष्टम् । यथा अमूर्तित्वेऽपि कालस्य फलप्रदत्वम्, वायोर्यथा अमूर्तित्वेऽपि मूर्तिमद्वृक्षचालनत्वम्, तथैव ईश्वरस्यापि अमूर्तित्वमेव वरम् । इत्यलमतिप्रसङ्गेना प्रकृतमनुसरामः—

[ तेषां परिगणनं च ]

शिवादीनां परिगणनमप्याह—

**शिवमेकमिति** । शिवं शिवाख्यं लयावस्थनिष्कलं **एकमेव विजनीयात्** तदानीं उपाध्यभावात्, निर्विकल्पकविषयत्वात् इत्यर्थः । **सादाख्यं पञ्चधा भवेत्** सादाख्यं शिवसादाख्यादिपञ्चविधं **भवेत्** । अत्र सादाख्यशब्देन सदाशिवः उच्यते । तदानीं उपाध्यवच्छिन्नत्वादिति ॥ १९ ॥

हे **महासेन** ! हे षण्मुख ! **महेशस्तु** महेशतत्त्वं तु **पञ्चविंशतिभेदकः**: पञ्चविंशतिविधं भवति ।

---

(a) पद्यार्धमिदं ड. प. पुस्तकयोः न दृश्यते ।

(1) महेशं तु- क. ख. ग. घ. च. छ ज. झ. ट. ठ ड.

(2) भेदकम्- क. ख. ग. घ- च. छ. ज ट. ठ ड.

[1]एतेषां तत्त्वसंयुक्तं एकत्रिंशदिति[2] स्मृतम् ॥ २० ॥
शिवस्य लक्षणं वक्ष्ये समासात् शृणु षण्मुख ।

---

[तत्त्वानां भेदोपपत्तिः]

सोऽयं प्रवृत्तत्वात् अधिष्ठेयाधिष्ठातृभेदेन भिद्यते । तदुक्तम्—

" किंतु यः प्रतिभेदोऽस्मिन् स शास्त्रे शक्तिभेदवत् ।
कृत्यभेदोपचारेण तद्भेदः स्थानभेदजः ॥ इति ।

अन्यत्र च—

"वपुषो विद्यमानत्वात् यद्वन्नित्यं करोति सः ।
तत्र तत्रास्य तत्कर्तृवपुषाऽनुकृतं वपुः" ॥ इति ।

तथैव शिवशक्तेरपि बिन्द्वादिविकारसमये नामधेयभिन्नत्वं सिध्दम् । **एतेषां**— शिव-सदाशिव-महेशानां **तत्त्वसंयुक्तं** अवान्तरतत्त्वभेदसहितं तत्त्वं **एकत्रिंशदिति** एकत्रिंशत्संख्याकमिति **स्मृतं** विज्ञातम् ॥ २० ॥

हे **षण्मुख** ! हे षडानन ! एकत्रिंशच्छिवभेदेषु प्रथमं **शिवस्य** शिवतत्त्वस्य **लक्षणम्** स्वरूपं **समासात्** संग्रहेण **वक्ष्ये** वदामि । **शृणु** अवधारय । निष्कलस्य शिवस्य स्वरूपमाह— **शिवमिति** । शिवपदमारभ्य अना-

---

(1) एतत्तु- ज.
(2) त्रिंशमिति- ज.

शिवं परात्परं[1] सूक्ष्मं नित्यं सर्वगमव्ययम्[2] ॥ २१ ॥

अनिंदितमनौपम्यं अप्रमेय मनामयम् ।

[लक्षणघटकपदार्थविवरणम्, तत्र शिवम् परात्परं च]

शुध्दत्वात् शिवमुद्दिष्टं पराद्रूर्ध्वं परात्परम्[4] ॥ २२ ॥

---

अयपदान्तं पददशकमपि तस्य शिवतत्त्वस्य निष्कलस्वरूपप्रतिपादकं भवति ॥ २१ ॥

इदानीं शिवदिंपदानां अर्थं विवृणोति– शुध्दत्वादित्यादिना ।

[शिवस्य शिवत्वोपपत्तिः]

शुध्दत्वात् शिवमिति । शुध्दत्वात् अनादित एव मोह-मद-राग-विषाद-शोष-वैचित्त्य-हर्षकारुयसप्तविधमलशक्तिकारणाभावात् मलशून्यत्वात् शुध्दम् । स्वतन्त्रतया स भगवान् आत्मनां सृष्ट्यादिंना मलपरिपाकं विधाय दीक्षादिना व्यापारेण परापरमोक्षौ प्रयच्छतीति शुध्दम् । तस्मात् शुद्धत्वात् विशुध्दिकारणत्वाच शिवम् ।

ये चान्ये परापरमोक्षभाज तिष्ठन्ति ते सर्वेऽपि तत्प्रसादात् ध्वस्तकलुषाः, ये चान्ये मुमुक्षवः तानपि मोचयति, तस्मात् शुध्दम् । शुध्दत्वादेव शिवं भवति । अत एव शिवतत्त्वं शिवमित्युद्दिष्टम् ॥

---

(1) परापरम्– ढ ब. द.

(2) गताव्ययम्– क. ख. घ. छ. झ. ट. ठ. द. फ.

(3) अप्रमाण– क. ख. घ. छ. ट. ठ. ड ढ त. द. ब.

(4) परापरम्– ढ.

[कर्तुः शिवस्य नित्यमुक्तत्वम्]

ननु सर्वात्मनां स्वातन्त्र्ये ननिमित्तजन्यं भवति। निमित्ताभावेऽपि तद्भवतीत्युक्ते मुक्तशिवानामपि संभविष्यत्येव। तस्मात् अविद्यानिर्मोक्षत्वमेव अस्वातन्त्र्ये तन्त्रम्। अमुक्तत्वाज्जीवः स्वकर्मफलभोजनेऽपि मुक्तौ च प्रेरकमपेक्षते। स तु कर्ता अमुक्त एव भवति।

पूर्वं यस्तु मलादिबन्धनबद्धः स एवात्मा बन्धनशून्यत्वात् मुक्तः इति व्यवह्रियते, नान्यः। लोकेऽपि यः कश्चित् निगलादिबन्धयुक्तो भवति। तद्व्यपगमे च स एव इत्युच्यते। तस्मात् बन्धशून्यत्वात् शिवस्य न मुक्तत्वम्। तद्विना अस्य कर्तृत्वमेव नास्तीति कश्चित्। तन्न। तेषां सर्वमायोदरमध्यस्थानां अनादिमलशून्यकर्तृकारकेणैव मुक्तत्वम्॥

अन्यथा मुक्तस्यापि तत्पूर्वमुक्तः, तस्यापि तत्पूर्वमुक्तः इत्याद्यनवस्था दुर्निवारा। तस्मात् अनादिसिद्ध एव कर्ता भवति।

[प्रवाहेश्वरवादनिरासः]

ननु- ईश्वरस्तु मुक्तं दृष्ट्वा असौ सर्वकार्यनिर्वर्तनक्षमः इत्यवबुध्य सर्वज्ञताऽदिरूपकर्तृत्वं तस्मिन् विधाय औदासीन्येन वर्तते, सोऽपि मुक्तात्मा। तथैवान्यं मुक्तं दृष्ट्वा तथैव करोतीति प्रवाहेश्वरवादी प्रत्यवतिष्ठते। ऐश्वर्यरूपव्यक्त्यलाभात्मकत्वेन विनाशानुपपत्तेः। अनेन एकेश्वरपक्षो निरस्तः इति। तन्न। मुक्तशिवानां सर्वार्थदृक्क्रियत्वेऽपि न ते सृष्ट्यादिकं कुर्वन्ति। अनाद्यभिव्यक्तदृक्क्रियत्वाभावात्।

परशिव एव अविरम्प्रथमनया सृष्ट्यादिकं करोति। अधिकारिणस्तु तच्छक्तिप्रचोदिताः कुर्वन्ति, न स्वातन्त्र्येण॥

[ परात्परत्वोपपत्तिः ]

[परादूर्ध्वं परात्परमिति । पराः परत्वेनाभिमताः ब्रह्मविष्ण्वादय तेभ्योऽपि ऊर्ध्वं उपरिस्थितं, ब्रह्मादीनामपि तत्कार्यनियामकत्वेन प्रभुः इत्यर्थः । अत एव शिवतत्त्वं परात्परं भवति] । परशब्देनात्र ईश्वर-शब्दस्य सन्निधौ अणव एवोच्यन्ते । तदुक्तम्—

"परो देही तदर्थत्वात् परार्थाः क्ष्मादयः स्मृताः" ॥

इति ।

[ मुक्तिस्वरूपविषये मतभेदानां संग्रहः ]

ये तु षट्त्रिंशत्तत्त्वमध्ये तत्तत्तत्त्वस्थितिरेव मुक्तिः इति अभिमानिनः तिष्ठन्ति . ते परशरीरपरिग्रहणात् ।

१) चार्वाक-कौलिक ज्योतिषिकाणां स्थूलभूतमध्यस्थितिरेव मुक्तिः ।

२) वामदक्षिणमार्गस्थितानां पिशाचपदप्राप्तिरेव मुक्तिः ।

३) स्मार्तनिष्ठानां तन्मात्रस्थितिरेव मुक्तिः ।

४) इन्द्रियचैतन्यवादिनां इन्द्रियतत्त्वस्थितिरेव मुक्तिः ।

५) वैशेषिकाणां अहङ्कारस्थितिरेव मुक्तिः ।

६) न्यायवादिनां मनस्तत्त्वस्थितिरेव मुक्तिः ।

७) बौद्धानां बुद्धितत्त्वस्थितिरेव मुक्तिः ।

८) आर्हतानां तत्वसंभोगिनां गुणतत्त्वस्तिथिरेव मुक्तिः ।

९) पाञ्चरात्रिकाणां प्रकृतितत्त्वस्थितिरेव मुक्तिः ।

१०) वेदान्तिसांख्यपातञ्जलानां पुरुषतत्त्वस्थितिरेव मुक्तिः ।

११) पौराणिकानां रागतत्त्वस्थितिरेव मुक्तिः ।

१२) कापालिकानां कालतत्त्वस्थितिरेव मुक्तिः ।

१३) पाशुपतोत्पत्तिसाम्य-वैषम्यसाम्यवादिनां च मायातत्त्वस्थितिरेव मुक्तिः ।

१४) महाव्रतानां शुद्धविद्यातत्त्वस्थितिरेव मुक्तिः ।

१५) शाक्तानां शक्तितत्त्वस्थितिरेव मुक्तिः ।

१६) गारुड-भैरव-वाम-भूततन्त्राणां च निवृत्त्यादिभुवनप्राप्तिरेव मुक्तिः ॥

[सङ्गृहीतमुक्तिभेदविषये प्रमाणम्]

तदुक्तम्—

"चार्वाकाः कौलिकाः ज्योतिश्शास्त्रज्ञाश्चैव भौतिकाः ।
वामदक्षिणमार्गस्थाः पिशाचादिपदस्थिताः ॥

तन्मात्रसिध्दाः स्मार्ताश्च चक्षुरादीन्द्रियं परे ।
वैशेषिकास्त्वहङ्कारे मनःस्थाः न्यायवादिनः ॥

बुध्दितत्त्वस्थिताः बौध्दाः गुणेष्वार्हतकाः स्थिताः ।
प्राकृताः पाञ्चरात्रास्ते मन्यन्ते प्रकृतिं हरिम् ॥

वेदान्तज्ञाश्च सांख्याश्च योगिनः पुरुषे स्थिताः ।
पाशुपत्यास्तु मायायाम् विद्यायां तु महाव्रताः ॥

शक्तितत्त्वे तदद्वैतं गतिमिच्छन्ति बिन्दुके ।
मुक्तिस्थानानि बाह्यानां उक्तानीह प्रसङ्गतः ॥ इति ॥

व्योमातीतं च सूक्ष्मं हि[1] नित्यं कारणशून्यतः[2] ।

---

[परात्परस्य प्रकारान्तरेण निर्वाहः]

एतेषां तत्तत्त्ववासित्वमात्रमेव न तदधिपतित्वम् । एभ्योऽपि पराः ब्रह्मविष्णुरुद्रविद्याविद्येश्वरसदाशिवार्हतशिवाः तेऽपि शरीरिण एव ।

तदुक्तम्—

"कमलजकेशवरुद्राः महेश्वरोऽन्यः परशिवः सकलाः ।
एते कारणसंज्ञाः स्वस्वध्वव्यापिनः स्वमात्रास्ते ॥

इति ।

एतेषां पराणां देहिनामित्यर्थः । ऊर्ध्वं नाम स्वतन्त्रतया तत्तदधिकारिणां सृष्ट्यादिकर्तॄणां प्रेर्याणां प्रेरकत्वम् । तस्मात् पराणां प्रेरकत्वात् परात्परम् भवति ।

अथवा-- पराः मुक्ताणुवर्गाः । तेषामप्यस्य प्रसादसिध्दापवर्गप्रापकत्वात् परात्परमिति वक्तुं युज्यते । अथवा-- बिन्दुमायादयः परमकारणत्वात् पराः । तैः अनवच्छिन्नत्वाद्वा परादूर्ध्वम् । तस्मात् परात्परमिति ज्ञायते । महतो महीयानित्यर्थः ॥ २२ ॥

[ सूक्ष्मत्वोपपत्तिः ]

**व्योमातीतं,** अत्र व्योमशब्देन चिदाकाशः उच्यते । शिवतत्त्वं चेदं चिदाकाशमतिक्रम्य वर्तते । यथा चिदाकाशं परैः नोप-

---

(1) व्योमातीततनुं सूक्ष्मं ख. ज. ग. च झ.

(2) कारणकारणम्– क ख. ग ट. ठ ड. ढ. त- कार्यकारणम्- घ.

व्याप्त्या[1] सर्वगतं प्रोक्तं अक्षीणं चाव्ययं[2] भवेत् ॥ २३ ॥

---

लभ्यते तथा इदं शिवतत्त्वमपि नोपलभ्यते इति शिवतत्त्वं सूक्ष्मं भवति ।

व्योमशब्देनात्र स्वपरप्रकाशकशिवलक्षणोक्त्यवसरपठितत्वात् न मायाकार्याकाशं भवति । व्योम चिदाकाशं, तस्यां चिद्रूपायां दिवि अतीतं अतिक्रान्तमित्यर्थः । चिदाकाशनिष्ठस्वभावः परैः अनुपलभ्यमानस्वरूपः सूक्ष्माकाशातिक्रान्ततया आदिमध्यान्तरहितत्वात् दृग्दृश्यभिन्नत्वाच्च परैरनुपलभ्यमानाः इत्यर्थः ।

तदुक्तं श्रीमन्मतङ्गे–

अथपत्युरधिष्ठानं स्वशक्तिकिरणात्मकम् ।
तस्यां दिवि सुदीप्तात्मा ...... ॥

इति ॥

अनुपलभ्यमानस्वरूपत्वात् सूक्ष्मम् । असर्वार्थदृशां नापरोक्षम् । अत एव अणोरणीयानित्यर्थः ।

[ कर्मकालेश्वरवादनिरासः ]

अनेन कर्मकालेश्वरवादिनौ प्रतिक्षिप्तौ । जडरूपिणोः तयोः अचेतनत्वात् चेतनाधिष्ठानं विना प्रवृत्त्यनुपपत्तेः । बैन्दवशरीरोपयोगित्वं चेश्वरस्य न घटते । तस्य च कर्त्रन्तरापेक्षापातात् अनवस्थैव प्रसज्यते ।

---

(1.) व्याप्तं– कख. घ छ. झ.ट. ड.
(2.) अक्षीणादव्ययम्– ख. ज. ग. च. झ.

[नित्यत्वसाधनम्]

नित्यं कारणशून्यतः स्वस्य कारणाभावात् शिवतत्त्वं नित्यं भवति।

सहकारिविरहप्रयुक्तकार्याभाववत्त्वमेव कारणत्वम्। सत्येव सहकारि-समुदाये यद्यज्जन्यते तत्तदभावे वा न जन्यते घटपटादिकं तत्तदनित्यं दृष्टम्। कारणजन्यत्वमेव अनित्यत्वाम् । तदुक्तं सांख्यकारिकायाम्—

"हेतुमदनित्यमव्यापि सक्रियमनेकं आश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" ॥

इति।

तस्मात् बिन्दुमायाकार्यवत् तस्य कुत्राप्यजन्यत्वं, अतो नित्यम्। बौद्धादीनामिव न क्षणिकं भवति।

[क्षणिकत्ववादानुवादः]

त एवं मन्यन्ते — ग्राहकरूपज्ञानं अर्थेन्द्रियासत्तेः समभिव्यञ्जकस्य सावधानविमर्शकस्य ग्राह्यस्य घटपटाद्यर्थस्य च चक्षुरादीन्द्रियस्य च आलोकादेश्चापि अनतिस्थैर्ययोगतः मुहुरेव उत्पद्यमानं स्यात्। भिन्नं तैस्तैरुपाधिभिः क्षणिकं व्यज्यते ; तदेव परं प्रमाणं तत्तदर्थप्रकाशकम्। भेदेनाप्रतिभासनात् व्यतिरिक्तमपि ज्ञानम् जलधाराप्रवाहवत् तुल्यापरापरोत्पत्तिभ्रमात् स्थैर्यमिवाभाति। विकल्पतः तत् स्थैर्यं अध्यारोपितं स्यात्। क्षणिकमेवास्तु ज्ञानम्। तत्कारणको ग्राहकरूप्यात्मा स्थैर्यमिति चेन्न। ज्ञानाद्व्यतिरेकात्मनि सत्येवान्य एवात्मा भवति।

स्वःशान्तरत्वादनेनात्माग्रहो भवद्भिरङ्गीक्रियते, यतः पूर्वानुभवपदार्थविषयेषु कालान्तरदेशान्तरेऽनागतेषु तेषु द्वेषरागौ सम्भवत एव । तथापि न तस्य नित्यता घटते । यत् सत् तदेव क्षणिकम् । अक्षणिकं असदेव । अर्थक्रियाकारित्वात् क्रमेण युगपद्वा अर्थक्रिया कुर्यात् ।

नित्यं वस्तु युगपत्करोति ? उत क्रमेण ? उभयथाऽपि करोतीत्युक्ते तथाविधं करणमेव नास्ति । अप्रच्युतस्थिरैकात्मनि संसिद्धौ कालान्तरेण नित्यं तदेव किं न करोति । कालान्तरापेक्षी कुर्यात् इत्युक्ते नित्यत्वस्वभावोऽस्य नास्त्येव । करणेभ्यो व्यतिरिक्तस्य किं तदपेक्षया ? स्वभावस्यैकरूपत्वात् तदनपेक्षत्वमेव वरम् । तदपेक्षायां तु अभेदतो विनाशः स्यात्, इति अनित्यता भवतीति वदामः ।

सहकारिणां सन्निधौ अर्थक्रियां कुर्यात् इत्युक्ते तदसन्निधौ अर्थक्रियां अकुर्वाणस्य उपलम्भ एव नास्ति । सहकारिणः अमुष्य नात्र किञ्चित्कराः स्युः इति चेत्-किमर्थं तदपेक्षा ? किञ्चित्करा यदि तैः व्यतिरिक्तं कुर्यात् ? उत अव्यतिरिक्तम् ? अकरणे व्यतिरिक्तस्य किं कारणापेक्षया ? सहकारिभिः स एव क्रियते इति वक्तुं न युक्तम् । करणे व्यतिरिक्तस्य स्थिरस्य सतः करणं पुनः त्रिक्षणावस्थायी भवतीति भवद्भिरभ्युपगतः । स एवात्मनः प्रवृत्तिरिति करणादेवं प्रतिपद्यते । सहकारिणः स्वस्वविषयप्रकाशकाः । विषयसन्निधानेऽपि आत्मनः सत्वेऽपि एकदा विषयग्रहणं न सिद्धम् ।

तत्र नित्यस्वभावस्यात्मनः कथं विषयग्रहणासमर्थत्वम् ? भवद्भिरपि पूर्वानुभूतपदार्थबुद्धौ विनष्टायामपि विषयनाशेऽपि तत्समानविषयं दृष्ट्वा

तस्मिन् अस्माभिरत्रानुभूतः शब्दोऽयमिति विषयग्रहण द्रव्यानुभूतविषयबुद्ध्य-तिशयाधानत्वं अङ्गीकर्तव्यम् , अन्यथा बुद्धेयकत्वे यत्किञ्चिद्विषयग्रहणं विना नान्यद्गृह्णाति । तस्मात् पूर्वपूर्वविज्ञानविनाशेऽपि उत्तरोत्तरसम्भवज्ञाने पूर्वज्ञानातिशयकृतधर्मातिशयाधानं सिद्ध्यत्येव । तस्मात् आत्मनः स्वभावहाने क्षणिकत्वमेव सिद्धम् ॥

[तन्निरासः]

एतन्मतं सिद्धान्ती दूषयति - न चक्षुरादीन्द्रियपञ्चकानि स्वतस्सिद्धानि भवन्ति । भोक्तृभोगसाधनत्वात् तत्तद्भोक्तृपुरुषप्रयत्नजन्यानेकविधपुण्यापुण्यादेव संभवति ।

भोक्तॄणां समत्वेऽपि भोगतत्साधनतनुकरणादिभेदात् भोक्तृप्रयत्नजन्यमेव, चक्षुषा रूपं गृह्यते, श्रोत्रेण शब्दो गृह्यते, त्वचा स्पर्शः, रसनया रसः, घ्राणेन गन्धो गृह्यते, । न वैपरीत्येन वैपरीत्यं गृह्यते । तस्मात् इमानीन्द्रियाणि कस्यचित् करणानि स्वतःसिद्धानि चेत्, कश्चित् बधिर इति, कश्चिदन्धः इति, कश्चित् षण्डः इति, व्यवहारः कथं स्यात् ? तस्मात् एतत्करणभोक्ता कार्यबलादेव सिद्ध्यति । स एवास्माऽस्तु नित्योऽभ्युपगन्तव्यः । अन्यथा क्षणिकत्वे देशान्तरकालान्तरभाविभोगनिमित्तं इदानीं विनश्यदात्मा कथं कर्म करोति ?

यदि वा कालान्तरभाविनः चैतन्यस्य अस्माभिरेवंविधं कर्म कियन्तं कालं एतस्मिन् देशे कर्तव्यमिति विचार्य कर्तुं कालो वा कथं भविष्यति ? स्वतः क्षणिकत्वात् । यदि वा अन्यकृतं पुण्यादिकर्म अन्येन भोक्तुं शक्यते । इदानीं वर्तमानपुत्राद्यनुभवसुखं विहाय निराहारादिसाध्यं तपः कथं कुर्वन्ति ? तपोहीनानामपि कथं वा सद्भोगभोक्तृत्वं न सिद्ध्येत् ?

तस्मात् सर्ववस्तूनि त्रैकाल्योद्भवान्यपि एकरूपेणानुभविता ज्ञानकारणकः नित्यसिद्धः। अतः समस्ताध्वोपादानज्ञानकर्त्रनपेक्षत्वेन जगज्जननासंभवात् जगत्कर्ता नित्यसिद्धः अभ्युपगन्तव्यः। तस्मात् नित्यम्।

[सर्वगतत्वविवरणम्]

व्याप्त्या सर्वगतं प्रोक्तम्। व्याप्त्या सर्वव्यापकत्वेन शिवतत्त्वं सर्वगतं इति प्रोक्तं अभिहितम्॥

साहचर्यनियमो व्याप्तिः। तच्च सर्वगतत्वम्। यत्र यत्र कार्यत्वं तत्र तत्र कर्तृपूर्वकत्वं सिद्धम्। यथा घटपटादिकम्। जगज्जननभोग-मरणादिकं कार्यं अभूतभावित्वात् तदुपादानज्ञानकर्त्रनपेक्षत्वेन न सिध्यति? तस्मात् अखण्डपरिपूर्ण एव जगत्कर्ता सिध्यति। सर्वदा सर्वत्र तत्कार्य-सृष्टिदर्शनात् क्षपणकानामिव शरीरमात्रपरिमितो न भवति॥

[ईश्वरस्य शरीरमात्रपरिमितत्ववादिक्षपणकमतानुवादः]

जीवाजीवास्रवसंवरनिर्जरबन्धमुक्ताः एते तु अस्तिकायत्वेनाभ्युपगताश्च अनेकान्तिनश्च। जीवास्तिकायः त्रिविधः अनादिसिद्धबद्धमुक्तभेदेन। अजीव-पदार्थोऽपि पुद्गलाकाशधर्माधर्मभेदेन चतुर्विधः। पुद्गलास्तिकायोऽपि क्ष्माऽबु-वह्निवायुभेदेन चतुर्विधः। आकाशास्तिकायश्च लोकालोकभेदेन द्विविधः। धर्मास्तिकायः अभ्युदयहेतुः। अधर्मास्तिकायः तद्विपर्ययहेतुः। चक्षु-रादीन्द्रियाणां यथास्वं प्रवृत्तिः आस्रवः। तेषामिन्द्रियाणां स्वस्वविषय-निवृत्तिः संवरः। केशोल्लुञ्छनतप्तशिलाशयनादिभिः निर्जीर्णवीर्यं कर्म येन क्रियते सः निर्जरः। नानानिरयसंसारकारणमोहाद्यष्टविधगुणोऽपि स्वातन्त्र्य-पातहेतुत्वात् जीवस्य बन्धो भवति।

" लोहपञ्जरमध्यस्थं जलक्षिप्तमलाम्बुकम् ।
यथाऽधो याति सहसा तथा जीवस्य बन्धनम् ॥ "

लोहपञ्जरविच्छेदात् यथा अलाबुकं प्लवते तथा जीवोऽपि मोहादिक्षयादारोहति मोक्षम् । तत् देहग्रहणात्पूर्वं जीवः अस्ति न वेति यो नियुङ्क्ते, तं प्रति अनेकान्तवादः तैरुच्यते ।

(१) स्यादस्ति, (२) स्यान्नास्ति, (३) स्यादस्ति च नास्ति च, ४) स्यादवक्तव्यम्, (५) स्यादस्ति चावक्तव्यम्, (६) स्यान्नास्ति चावक्तव्यम् च, (७) स्यादस्ति च नास्ति चावक्तव्यं चेति ॥

तत्र यत् पर्यनुयोज्यम् सदसत्तया तत् समाधेयम् । तत्र वाच्यतया, विरोधहानिस्तु घटनीया । सप्तभङ्ग्यमोघब्रह्मास्त्रवतां अजेयमिह किं भवेत् ॥

[तन्निरासः]

तन्मतं दूषयति । अनेकान्तवादिना त्वया सर्वं सदसत्तया समाधेयमित्युक्तं । अनेकान्तवाद एवास्माकमित्युक्ते प्रतिज्ञाभङ्गो भवति, अनेकान्तवाद इति एकान्तग्रहणात् । तदपि स्यादनेकान्तः स्यात् । एकान्तश्चेत्यादिना वक्तव्यमित्युक्तेऽपि तदप्येकान्तग्रहणं स्यात् । एतद्देहग्रहणात्पूर्वं जीवोऽस्ति उत नेत्युक्ते, जीवोऽस्त्येवेति चेत् देही न भवतीति वाच्यम् । तत्तिष्ठतु ।

अनादिसिध्दः श्रेष्ठो वा ? अश्रेष्ठो वा ? इत्युक्ते – चैत्यात् श्रेष्ठः वैश्रवणादश्रेष्ठ इति वक्तव्यम् । तदानीं मानासिध्दस्यापि अपकर्षता

सिध्द्यति। इदानीं अत्र सर्पोऽस्ति वा? न वा? इति कथिते, अस्तीत्युक्ते, निस्सर्पदेशेऽपि सर्पो भवेत्। साध्वसमन्धकारप्रदेशेऽपि प्रकाश एव स्यात्। पूर्वं अत्र सर्पसंयोगो नास्ति, अतः सर्पोऽत्रास्तीत्युक्त तत्कालापेक्षमेव भवति। पातालं अमरलोको वा अत्रास्ति वा? न वा? इति शङ्कायां, अत्रास्तीति कथं वक्तुं युज्यते? तस्मात् स्वव्याघातकमेव लक्षणं त्वया साध्यते।

इतरसङ्करभयात् आत्मनां अव्यापित्वं त्वया साधितम्। भोगावस्थायां अव्यापिनश्चेत् मुक्तौ कथं व्यापिनो भवन्ति? ये च सङ्कोचविकासधर्मिणः तेषामनित्यत्वाचेतनत्वाद्यनेकदोषाः सम्भवन्ति। आत्मनां सर्वकर्मक्षयनः ज्ञानावरणीय—दर्शनावरणीय-वेदनीय-मोहनीय-आयुष्य-नाम-गोत्र-अन्तरायाख्याष्टगुणपरित्यागात् अवाप्तानन्तज्ञानानन्द-दर्शनानन्द-वीर्यानन्द-सुख-निरायुष्य-निर्णाम-निरन्वय-निरन्तरायाख्यशुद्धाष्टगुणप्रवेशात् मुक्तिरिति भवद्भिरुक्तम्॥

आत्मनः कर्मजडत्वात् स्वयं न निवर्तते। जीवोऽपि अनादिदेशान्तरनिष्ठकर्मफलानि न जानाति। अज्ञस्य मुक्त्यर्थं निश्शेषतः कर्मभोजनमपि न सिध्यति। मुक्तिसुखाज्ञस्य मुक्तिं प्रति प्रवृत्तिरपि न स्यात्। तेन मोक्षवचनमपि न ज्ञायेत। तत्साधनशास्त्रप्रणेतारमन्तरेण कर्मानुष्ठानादिकं च न सम्भवति। अनादिसिध्दस्तु रागाद्यभावतः किमपि न वक्ति। तस्मात् आदिसिध्दः शास्त्रकर्तेत्यभ्युपगन्तव्यः। सोऽपि कथं मुक्तः इत्याद्यनवस्था प्रसज्यते। मुक्तस्तु मुक्तिस्थानप्रवेशानन्तरं शास्त्रं न कुरुते। बध्दावस्थायां कर्तुं न समर्थो भवति। कृतमेव न प्रमाणिकमेव भवति। तस्मात् प्रपञ्चोऽपि भवता ह्यकर्तृपूर्वकोऽभ्युपगतः।

प्रपञ्चस्य अभूत्वाभावित्वमेव कार्यताप्रयोजकम् । यत् कार्यं तत्कर्तृपूर्वकम्, यथा घटादिः । सर्वदेशविलयेऽपि एकदेशस्थितिः भवता ह्यङ्गीकृता ॥

यस्य धर्मिणो लोके यो धर्मः एकदेशे दृष्टः स धर्मः सर्वत्र न भवति। इति नियामकं वक्तव्यम् । तस्मात् सिद्धकर्तृकः प्रपञ्चोऽपि भवता न ज्ञायते । अतः त्वन्मतगुरोः सर्वज्ञदर्शित्वं, तदुक्तमोक्षोपायश्च निरर्थका एव । तस्मात् व्यापक एव कर्ता भवतीति ब्रह्मादितृणान्तपिण्डवर्गं शिवादि कालज्ञानान्ताण्डवर्गं चाभिव्याप्य वर्तमानतया 'व्याप्त्या सर्वगतं प्रोक्तम्' इति सिद्धम् ॥

[ अव्ययत्वसाधनम् ]

**अक्षीणं चाव्ययं भवेत् ।** यतः शिवतत्त्वं **अक्षीणं** –क्षयरहितं तत एव **अव्ययं** भवेत् इत्यर्थः ।

क्षीणत्वं नाम पूर्वपूर्वानुभववैभवहान्या निकृष्टावस्थाप्राप्तिः । इतरदर्शनप्रणेतृतदनुसारिणोऽपि यत् स्थानं इदमेव मुक्तिरिति गताः । महाप्रलये एतत्स्थानोपादानरूपबिन्दुमायाकार्योपसंहारे तत्स्थाननाशात् तत्स्थानिनोऽपि नाशो भवति । तदेव क्षीणत्वम् ।

तदुक्तं श्रीमन्मृगेन्द्रे–

यत् कैवल्यं पुंप्रकृत्योर्विवेकात्
यो वा सर्वं ब्रह्म मत्वा विरामः।
या वा काश्चिन्मुक्तयः पाशजन्याः
तास्ताः सर्वाः भेदमायान्ति सृष्टौ ॥

सिद्धान्तसारावल्यामपि–

[अनिन्दितमनौपम्यमप्रमेयं च]

**अमलं त्वनिन्दितं तत्[1] असादृश्यात्[2] अनौपमम् ।**

---

" संहारे भुवनेश्वराः हरिरथो ब्रह्मा च तत्प्राणिनः
विज्ञानाकलतां प्रयाति ............... ॥ " इति ।

शङ्कराचार्योऽपि –

"विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्री माहेन्द्री विततिरपि संमीलितदृशां
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥ " इति ।

तस्मात् अनादित एव सर्वज्ञताऽदिगुणनिष्ठ एष तिष्ठतीति अक्षीणः । तस्मात् अव्ययमित्यर्थः ॥ ॥

शिवतत्त्वं तु **अमलं** मोहादिमलरहितम् । **तत्** तस्मात् **अनिन्दितं** भवति

[अनिन्दितत्वसाधनम्]

मलो नाम तण्डुलताम्रयोः तुषकालिकावत् अनादिसर्वात्मदृक्क्रिया-वारकानेकशक्तिरेक एव सर्वेषामात्मनां स सहज एव । यथा 'स्फटिक-

(1) अमलोऽनिन्दितं ज्ञेयं– ग. च. ज. झ. ट ठ. त थ.
(2) असादृश्यं– क घ. छ. ट. ठ. त. ढ.

तस्मात् भूधरादिरूपं महत्कार्यं दृष्ट्वा शिवोऽपि सर्वज्ञः अनुमीयते। तत् सर्वज्ञत्वं न मलिनानां सम्भवति। ये मोह-मद-राग-विषाद-ताप-शोष-वैचित्र्याख्यसप्तमलभाजः मलिनाः तेषां स्वपदादूर्ध्वं परिज्ञानाभावतः तत्तदुपायानां निन्दितत्वमेव भवति। तस्मात् **अमलत्वात्** शिवः **अनिन्दितः** इत्यर्थः।

**असादृश्यादनौपमम्** शिवतत्त्वं **असादृश्यात्**- सादृश्यरहितत्त्वात् **अनौपम्यं** भवति ॥

[ अनौपम्यसाधनम् ]

सादृश्यं नाम— समानवस्तुत्वम्। लोके गवयज्ञानेच्छुना नागरिकेण 'कीदृशो गवयः' इत्यारण्यके पृष्टे सति 'गोसदृश एव गवयः' इत्युक्ते तदन्वेषिणां तत्साम्यं गवये प्रतिपद्य गवयशब्दवाच्योऽयं पिण्डः इति ज्ञायते तत्सादृश्यम्। तद्वत् शिवप्रत्यक्षाभिलाषिणा पुरुषेण पृष्टे एतादृशः शिवः इति दृष्टान्तीकर्तुं किमपि नास्ति। अत एवासदृशम्। असादृश्यादेवासौ अनौपम इत्यर्थः ॥

श्रुतिरप्याह—

"एक एव रुद्रो न द्वितीयाय तस्थे" इति। "एको वशी सर्वभूतान्तरात्मा" इति च। दृक्क्रियात्मत्वात् आत्मसदृशः इत्युक्ते तेषां अनादिव्यक्तदृक्क्रियाभावात् शिवसमानता नास्तीत्यर्थः ॥

[ अप्रमेयत्वोपपत्तिः ]

**शिवतत्त्वं प्रमाणव्यतिरिक्तत्वात्**— प्रत्यक्षानुमानादिप्रमाणशून्यत्वात् **अप्रमेय** इति स्मृतम्।

[ अनामयम् ]

**निर्गुणत्वाद्विशेषेण ह्यनामय मिति[1] स्मृतम्[2] ॥**

---

प्रमाणं नाम प्रमाकरणम् । प्रमा नाम संशयविपर्ययादिनिर्मुक्तं ज्ञानम् । तज्ज्ञानस्य यत् साधनं तदेव प्रमाणम् । तानीन्द्रियाण्येवेति नैयायिकानां दुरभिगमः । तैः इन्द्रियषट्केन यत् ज्ञायते तत् सकलं न सत्यमेव । तस्मात् शिवः इन्द्रियप्रमाणगम्यो न भवतीत्यर्थः ॥

[ इन्द्रियगोचरवस्तुसामान्याभावनिरासः ]

ननु इन्द्रियप्रमाणागोचरं यत् वस्तु तत् नास्त्येव । तर्हि शशविषाणप्रायमेवेति चेत् न । ज्ञानैकगम्यः इत्यर्थः ।

तदुक्तं पौष्करे—

" न चक्षुः शब्दसंवित्तौ न श्रोतुं रूपवेदने ।
सर्वत्र ग्राहिका संवित् सैव मानमिहोच्यते ॥ "

इति । अन्यत्र च—

" सर्वत्रावस्थितं शान्तं न पश्यन्ति शङ्करम् ।
ज्ञानचक्षुर्विहीनत्वात् अन्धः सूर्यमिवोदितम् ॥ "

इति । अन्यत्र च कालोत्तरे—

" न स्थूलरूपो न च सूक्ष्मरूपः ज्ञानैकगम्यो जगदेकबन्धुः ।"

इति । तस्मात् अप्रमेयमित्यर्थः ॥२५॥

तच्च शिवतत्त्वं **निर्गुणत्वात्** सत्वरजस्तमोगुणरहितत्वात् **विशेषेण** विशेषतः **अनामयमिति स्मृतं** भवति ।

---

(1) चानामयमिति– ख. झ. अनामयमिति– क. ग. च. छ. ज. ट.
(2) मितीरितम् – ध.

इत्येतैर्लक्षणैर्युक्तं शिवरूपमिहोच्यते ॥[1]

[ शिवस्य पञ्चतत्त्वात्मकशुद्धाध्वसृष्टिसङ्कल्पः ]

सृष्ट्यर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणम् ।
योगिनामुपकाराय स्वेच्छया चिन्तितः[2] शिवः[3] ॥२६॥

---

गुणाः सत्त्वरजस्तमांसि येषां ते शरीरिणो भवन्ति ; तेषां आमयः सुखदुःखात्मकः, सोऽस्य नास्तीति । निर्गुणत्वादेव हेतोः। अनामयमित्यर्थः । इत्येतैः लक्षणैः युक्तम् । इति एवंप्रकारेण एतैः शुद्धत्वादिकैः लक्षणैः इतरव्यावर्तकैः चिह्नैः युक्तं सहितम्, शिवरूपं शिवस्य स्वरूपं इह वातुलतन्त्रे उच्यते मया कथ्यते ॥

शुद्धाध्वनः सृष्टिं वक्ष्यति– सर्वतत्त्वानां शिव-शक्ति-सदाशिव-ईश्वर-शुद्धविद्याभिधानानां पञ्चविधतत्त्वानां, सृष्ट्यर्थं शुद्धाध्वोपादानभूत-बिन्दोः सकाशात् व्यक्तीकरणार्थं लोकस्योत्पत्तिकारणं लोकानां वाम-ज्येष्ठाश्रितानन्तानां विशुद्धत्रयस्त्रिंशद्भुवनानां, उत्पत्तिकारणं उत्पत्तिसिद्ध्यै अभिव्यक्तीकरणार्थं च, योगिनां मलादिपञ्चविधपाशसम्बधिनां सक-लानामित्यर्थः । उपकाराय सदाशिवादितत्त्वनिष्ठकारणेश्वराधिष्ठानवशात् तेषां मलपरिपाकार्थं, शिवः संहारावसाने स्वेच्छया सर्वात्मकारुण्येन चिन्तितः एवम्भूतानामणूनां एवं प्रकारतत्त्वभुवनादिकमेवेति चिन्तितवान् । तत्तदाकारेण अवलोकितवान् इत्यर्थः ॥

---

(1) मिति स्मृतम्- ख झ.
(2) चिन्त्यते- ख. घ. झ. ट. ठ. द ध ब. फ.
(3) शिवम्- फ.

[ शिवात् पञ्चशक्तीनामाविर्भावः ]

**तच्छिवात्तु[1] परा शक्तिः सहस्रांशेन जायते ।**

---

तदुक्तं पौष्करे—

"मायायाः द्विविधा सृष्टिः सङ्कल्पात् कारणादपि ।
न हि सङ्कल्पमात्रेण कुलालैः क्रियते घटः ॥
शिवः सङ्कल्पमात्रेण बिन्दुक्षोभकरः सदा ।
न व्यापारविशेषेण येनायं विकृतो भवेत् ॥"

इति । श्रीमन्मृगेन्द्रेऽपि—

"बिन्दुशक्त्या पुरा क्षोभ्य शुद्धाध्वानं शिवोऽसृजत् ।
मायां विद्येशमार्गेण तत्त्वाद्यं चासितं पुनः ॥"

इति । श्रीमत्किरणेऽपि—

"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसि ते प्रभुः ॥"

इति । तत्त्वप्रकाशवृत्तौ अघोरशिवाचार्यैरपि—

"तत्र शिवस्य साक्षात् सृष्टिः बिन्द्वात्मकादुपादानात् शुद्धतत्त्वाद्युत्पादनपूर्वकं तत्तद्भुवनवासिनां विद्येश्वराणां वैन्दवादिशरीरयोजनम्, नादादिक्रमेण शब्दोत्पादनं च" इति । २६ ।

शिवस्य परापरमूर्तित्वमस्ति । तयोः परमूर्तिं वक्ष्यति—तच्छिवादित्यादिना[2] । तच्छिवात् तस्मात् शिवात् पूर्वोक्तशिवतत्त्वादि-

---

(1) तच्छिवे तु— ख. ग. च. ज. झ. द. तत्त्वचिन्ता— क. घ. छ. ट. ड. ढ त.

(1) अस्मिन् तत्त्वभेदपटले एतावत्पर्यन्तमेव एतद्व्याख्यानमुपलभ्यते ।

तच्छक्तेस्तु[1] सहस्रांशात् आदिशक्तिसमुद्भवः ॥२७॥
आदिशक्ति[2]सहस्रांशात् इच्छाशक्तिसमुद्भवः ।
इच्छाशक्ति[3]सहस्रांशात् ज्ञानशक्तिसमुद्भवः ॥२८॥

[ आसां निष्कलत्वम् ]

ज्ञानशक्ति[4]सहस्रांशात् क्रियाशक्तिसमुद्भवः ।
एता वै शक्तयः पञ्च[5] निष्कलाश्चेति कीर्तिताः ॥२९॥

---

त्यर्थः । तस्य **सहस्रांशेन** सहस्रांशेष्वेकांशेन **पराशक्तिः जायते** उत्पद्यते । **तच्छक्तेस्तु** तस्याः पराशक्तेस्तु **सहस्रांशात्** सहस्रांशेष्वेकांशात् **आदिशक्तिसमुद्भवः** आदिशक्तेः समुत्पत्तिः भवति ॥२७॥

**आदिशक्तिसहस्रांशात्** तस्याः आदिशक्तेः सहस्रांशेषु एकांशात् , **इच्छाशक्तिसमुद्भवः** इच्छाशक्तेः समुत्पत्तिः । **इच्छाशक्तिसहस्रांशात्** इच्छाशक्तेः सहस्रांशेषु एकांशात् **ज्ञानशक्तिसमुद्भवः** ज्ञानशक्तेः समुत्पत्तिः भवति ॥२८॥

**ज्ञानशक्तिसहस्रांशात्** ज्ञानशक्तेः सहस्रांशेष्वेकांशात् , **क्रियाशक्तिसमुद्भवः** क्रियाशक्तेः समुत्पत्तिः भवति । **एताः वै पूर्वोक्ताः शक्तयः** पराशक्ति-आदिशक्ति-इच्छाशक्ति ज्ञानशक्ति-क्रियाशक्तिरूपाः **पञ्च** पञ्चसंख्याकाः भवन्ति । एताः पञ्चशक्तयः **निष्कलाः** इति कलारहिताः ।

---

(1) तच्छक्तिस्तु- क. घ. छ ट. ठ.
(2) तच्छक्ति- क. ख. घ. छ. फ
(3) तछक्तेस्तु- थ द. प ब. ड. ढ त.
(4) तच्छक्तेस्तु- ठ ड. ठ. त थ. द. प
(5) एता वै पञ्चधा शक्तिः- क. घ छ. ट. ठ.

[ शक्तेः सृष्टिप्रपञ्चः सादाख्योपयोगश्च ]

शिवसृष्टिरियं[1] प्रोक्ता शक्तीनां सृष्टिरुच्यते ।
योगिनां च यतीनां च ज्ञानिनां[2] मन्त्रिणां तथा ।३०॥

ध्यान[3]पूजानिमित्ताय सकलं निष्कलं भवेत् ।
तद्रूपं हि महासेन ! सादाख्यमिति कीर्तितम्[4] ॥३१॥

---

इति कीर्तिताः निरूपिताः । एतादृशनिष्कलशक्तियुक्ततया शिवः निष्कलः इत्युच्यते ।२९॥

इयं एषा शिवसृष्टिः शिवतत्त्वसम्बधिनी सृष्टिः प्रोक्ता एतावत्पर्यंतं कथिता । इतःपरं शक्तीनां पराशक्त्यादीनां पञ्चशक्तीनां सम्बधिनी सृष्टिः उच्यते- कथ्यते । वक्ष्यमाणसृष्ट्युपयोगितया ध्यानादिकं निरूपयति- योगिनामिति । योगिनां शिवयोगनिरतानां यतीनां विषयेभ्यः उपरतानां, ज्ञानिनां मोक्षाभिलाषिणां तथा मन्त्रिणां शिवमन्त्रपरायणानां च- ॥३०॥

-ध्यानपूजानिमित्ताय ध्यानार्थं पूजार्थं च सकलं निष्कलं सकलनिष्कलं सदाशिवरूपं भवेत् । लोकानुग्रहाय पूर्वोक्तनिष्कलशिव एव सकल-

---

(1) शिवशक्तिरियं- ब.
(2) मुनीनां- प
(3) शिव- ब.
(4) समासेन- क ख. ग. घ. च छ. ज.

[ शक्तिपञ्चकात् पञ्चसादाख्यानामाविर्भावः ]

सादाख्यं पञ्चधा प्रोक्तं तेषां लक्षणमुच्यते ।
पञ्चशक्त्यादिशक्तेश्च[1] सादाख्यस्य समुद्भवः ॥३२

[ तेषां नामनिर्देशः ] नामान्तराणि च

प्रथमं शिवसादाख्यं अमूर्तं तु[2] द्वितीयकम् ।
तृतीयं मूर्त[3]सादाख्यं चतुर्थं कर्तृनामकम् ॥३३

---

निष्कलरूपसदाशिवो भवतीति भावः । तद्रूपं हि पूर्वोक्तं सकलनिष्कलरूपं सदाशिवस्वरूपमेव सादाख्यमिति सादाख्यनाम्ना कीर्तितम् अभिहितम् ॥० ॥३१॥

तत् सादाख्यं पञ्चधाः पञ्चप्रकारेण शिवसादाख्य-अमूर्तसादाख्य-मूर्तसादाख्य-कर्तृसादाख्य-कर्मसादाख्यरूपेण प्रोक्तं कथितम् । तेषां पञ्चविधसादाख्यानां लक्षणं स्वरूपं उच्यते अभिधीयते । पञ्चशक्त्यादिशक्तेश्च पूर्वोक्तपञ्चप्रकारात्मकचिच्छक्तेः सकाशात् सादाख्यस्य सादाख्यतत्त्वस्य समुद्भवः सम्भवः भवति ॥ ॥३२॥

तस्य च सादाख्यस्य पञ्चभेदान् नाम्ना क्रमेण निर्दिशति– प्रथममित्यादिना । तत्र शिवसादाख्यं प्रथमं भवति । अमूर्तसादाख्यं तु

---

(1) पराशक्त्यादिशक्त्योश्च– क. ख. घ. छ. त.
(2) अमूर्तिस्तु– प.
(3) मूर्ति · ट द. ध. प फ. ब.

पञ्चमं कर्मसादाख्यं उक्तं सादाख्यपञ्चकम्[1] ।
सदाशिवस्तथेशश्च ब्रह्मेशश्चे[2]श्वरस्तथा[3] ॥३४॥

[ तेषामेव रूपान्तराणि ]

ईशानश्चेति पञ्चैते[4] तत्त्वभेदाः[5]प्रकीर्तिताः ।

---

द्वितीयकं द्वितीयं भवति । मूर्तसादाख्यं तु तृतीयं भवति । कर्तृनामकं कर्तृसादाख्यं चतुर्थं भवति ॥३३॥

कर्मसादाख्यं पञ्चमं भवति । एवं सादाख्यपञ्चकं शिवसादाख्यादिकर्मसादाख्यान्तं सादाख्यपञ्चकं उक्तं कथितं भवति । इदानीं पञ्चसादाख्यानां नामान्तराणि यथाक्रमं निर्दिशति सदाशिवः इत्यादिना । शिवसादाख्यतत्त्वभेदः सदाशिवनाम्ना तथा अमूर्तसादाख्यतत्त्वभेदः ईशनाम्ना तथा मूर्तसादाख्यतत्त्वभेदः ब्रह्मेशनाम्ना कर्तृसादाख्यतत्त्वभेदः ईश्वरनाम्ना– । ३४॥

कर्मसादाख्यतत्त्वभेदः ईशाननाम्ना च स्मृतः । एते पञ्च तत्त्वभेदाः प्रकीर्तिताः कथिताः । एतेषु पूर्वोक्तेषु पञ्चतत्त्वेषु

---

(1) पञ्चसादाख्यमुच्यते– क घ. ट. ठ ड ढ. त. थ. द ध. प व.

(2) ब्रह्मा चैवे– ग. च. ज झ. फ. भ.

(3) रः स्मृतः– क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध.

(4) पंचैव– क. घ. छ.

(5) मूर्तिभेदाः फ.

[ तेषामेव रूपान्तराणि ]

एतेषु पञ्चतत्त्वेषु विशेषस्त्वधुनोच्यते ॥ ३५ ॥

[1]शिवं सदाशिवो[3] ज्ञेयं अमूर्तं चेश उच्यते ।
मूर्तं[4] ब्रम्हेति विज्ञेयं कर्तृ चैवेश्वरः स्मृतम् ॥३६ ॥

कर्मेशान इति प्रोक्तं इत्येवं द्विविधं स्मृतम् ।

---

शिवसादाख्यादिपञ्चतत्त्वेषु विशेषस्तु वक्तव्यविशेषांशः अधुना इदानीं उच्यते अभिधीयते ॥ ३५ ॥

शिवं शिवसादाख्यतत्त्वं सदाशिवः सदाशिव इति ज्ञेयं ज्ञातव्यम् । अमूर्तं च अमूर्तसादाख्यतत्त्वं च ईशः ईश इति उच्यते अभिधीयते । मूर्तं मूर्तसादाख्यतत्त्वं च ब्रम्हेति ब्रम्हेशः इति विज्ञेयं विज्ञातव्यम् । कर्तृ चैव कर्तृसादाख्यतत्त्वं च ईश्वरः ईश्वर इति स्मृतम् ।। ३६ ॥

कर्म कर्मसादाख्यतत्त्वं ईशान इति ईशाननाम्ना प्रोक्तं प्रकीर्तितम् । इत्येवं उक्तप्रकारेण शिवतत्त्वं द्विविधम् शिवसादाख्यादि-

---

(1) इदमर्धं– क. ख. घ. ङ. ट. ठ. ढ. त. ध. फ. पुस्तकेषु न दृश्यते ।

(2) पद्यार्धमिदं– झ. पुस्तके न दृश्यते ।

(3) सदाशिवं– क. ख. घ. छ. ट. ठ. ढ. त. ध. फ.

(4) मूर्तिं – प.

[ तत्र शिवतत्त्वस्य रूपत्रयम् ]

[1]परात्परतरं चैव सूक्ष्मतः सूक्ष्ममेव च[2] ॥ ३७॥

[3]स्थूलात् स्थूलं क्रमेणैव[4] शिवादि परिलक्ष्यते ।
[5]तदीयं त्रिविधं रूपं स्थूलं सूक्ष्मं ततः परम्[6] ॥ ३८ ॥

---

रूपेण सदाशिवादिरूपेण च द्विप्रकारं स्मृतम् । परात्परतरं परवस्तुनोऽपि परतरं सूक्ष्मतः सूक्ष्ममेव च अतिसूक्ष्मवस्तुनोऽपि सूक्ष्मतरम् , अणोरण्यणीयः इति यावत् ॥ ३७ ॥

स्थूलात् स्थूलं स्थूलवस्तुनोऽपि स्थूलतरम् , महतो महीयः , महत्तरमिति यावत् । शिवादि ईदृशं शिवादितत्त्वं शिवतत्त्वं सदाशिवतत्त्वं , महेशतत्त्वं चेति तत्त्वत्रयं क्रमेणैव क्रमश एव परिलक्ष्यते स्वरूपतो निरूप्यते । तदीयं रूपं पूर्वोक्तशिवतत्त्वस्य स्वरूपं स्थूलं सूक्ष्मं ततः सूक्ष्मात् परं परात्परमित्यर्थः । इति त्रिविधं त्रिप्रकारकं भवति ॥ ३८ ॥

---

(1) इदमर्धं- ब पुस्तके न दृश्यते .

(2) सूक्ष्मसूक्ष्मं तथैव च- फ.

(3) इदमर्धं- ब पुस्तके न दृश्यते.

(4) स्थूलसूक्ष्मक्रमेणैव- ख. ग. च. झ.

(5) इत आरभ्य '' तद्र...पमास्तिकैः '' इत्यन्तो भागः ध. फ. पुस्तकयोः न दृश्यते ।

(6) तदेतत् त्रिविधं स्थूलं सूक्ष्मतत्त्वं ततः परम्- ख. ग. च झ.

[ रूपत्रयस्वरूपाणि ]

अस्मदाद्यमरैर्दृश्यं[1] स्थूलं सूक्ष्मं च योगिभिः[2] ।
ततः परं तु यन्नित्यं ज्ञानमानन्दमव्ययम् ॥ ३९ ॥

[ शिवसादाख्यादितत्त्वानां मूर्तितत्त्वप्रभावात्मना त्रैविध्यम् ]

तन्निष्ठैः तत्परैः भक्तैः[3] दृश्य तद्रूपमास्तिकैः[4] ।
[5]एतेषु पञ्चतत्त्वेषु विशेषस्त्वधुनोच्यते ॥ ४० ॥

---

स्थूलं स्थूलतत्त्वं अस्मदाद्यमरैः अस्मदादिभिः देवैरेव दृश्यं दर्शनीयं भवति । सूक्ष्मं च सूक्ष्मरूपं तु योगिभिः योगनिष्ठैः दृश्यं वेद्यं भवति । नित्यं कारणरहितं कालत्रयेऽपि वर्तमानं ज्ञानम् ज्ञानस्वरूपं आनन्द आनन्दस्वरूपं अव्ययं अविनाशि च यत्तु ततः परं परात्पररूपं वर्तते— । ३९ ॥

तद्रूपं परात्पररूपं तन्निष्ठैः तत्परतत्त्वानुष्ठानपरैः तत्परैः तल्लीनैः आस्तिकैः परतत्त्वविश्वासिभिः भक्तैः भक्तोत्तमैः दृश्यं दर्शनीयं भवति । एतेषु पूर्वोक्तेषु पञ्चतत्त्वेषु शिवसादाख्यादिपञ्चतत्त्वेषु विशेषस्तु विशेषतत्त्वं तु अधुना इदानीं उच्यते अभिधीयते ॥ ४० ॥

---

(1) अस्मदाद्यमनिर्दिश्य– ख. ग. च. झ.

(2) योगिनः– ख. ग. च. झ.

(3) भक्त्या– ख. ग. च. झ.

(4) तद्रूपमास्तिकैः– क. ख. छ. ढ. ध.

(5) एतदारभ्य 'विद्यते क्रमात् , इत्यन्तो भागः ड. प. पुस्तकयोः न दृश्यते ।

तत्त्वमूर्तिप्रभावं च त्रिविधं[1] विद्यते[2] क्रमात् ।
शिवश्च तत्त्वमित्युक्तः[3] मूर्तिश्चैव[4] सदाशिवः[5] ॥ ४२ ॥

तयोर्योगेन[6] यद्रूपं[7] तद्रूपं भाव उच्यते[8] ।
भावः सादाख्य[9]मित्युक्तः इत्येवं परिकल्पितम्[10] ॥ ४२ ॥

तद्यथा—तत्त्वमूर्तिप्रभावं च तत्त्वमूर्तिः प्रभावश्चेति त्रिविधं त्रिप्रकारं क्रमात् क्रमेण विद्यते वर्तते । शिवश्च पूर्वोक्तनिष्कलशिव एव तत्त्वमिति तत्त्वनाम्ना उक्तः कथितः । सदाशिवः पूर्वोक्तसकलनिष्कलरूपः सदाशिवः सदाशिवाभिधानः मूर्तिश्च सकलांशेन मूर्तिरित्युक्तो भवति ॥ ४१ ॥

तयोः शिवतत्त्वसदाशिवतत्त्वयोः योगेन सम्बन्धेन यद्रूपं भवति तद्रूपं भाव इति भावनाम्ना उच्यते कथ्यते । भावः एतत् भावनात्मकतत्त्वम् सादाख्यमिति सादाख्यतत्त्वमिति उक्तः अभिहितः । इत्येवं एवं प्रकारेण शिवाख्यनिष्कलतत्त्वमेव शिवतत्त्वम् सदाशिवाख्यमूर्तितत्त्वं भावसादाख्यतत्त्वं चेति त्रिधा परिकल्पितं विभक्तम् ॥ ४२ ॥

---

(1) त्रिभेदं– क. ख (पा) फ. ब.
(2) विन्द्यते - क. द
(3) शिवादितत्त्वमित्युक्तम्– फ.
(4) मूर्तं चैव– थ.
(5) महेश्वरः– ख ग. च झ.
(6) योगस्य– ड. प.
(7) भावेन– क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ब.
(8) भावसंज्ञकम्– ख. ग च. झ.
(9) भावसादाख्य– ड. प., एवं सादाख्य– थ.
(10) परिलक्ष्यते - फ

[ तेषामेव मूर्त्यादिरूपत्वे औचित्यम् ]

[1]सन्ततं शिवभावत्वात् सादाख्यमिति कीर्तितम् ।
निष्कलं तत्त्वमित्युक्तं सकलं मूर्तिरुच्यते ।[2] ४३ ॥

सकलं निष्कलं चैव प्रभाव[3] इति कीर्तितम् ।
देही निष्कल इत्युक्तः[4] देहः सकल ईरितः[5] ॥ ४४ ॥

---

इदं च भावतत्त्वं सन्ततं सदा शिवभावत्वात् शिवरूपेण वर्तमानत्वात् सादाख्यमिति सादाख्यतत्त्वमिति कीर्तितम् अभिहितम् । निष्कलं निष्कलशिवस्वरूपं तत्त्वमिति तत्त्वनाम्ना उक्तं कथितम् । निष्कलशिवतत्त्वमेव सकलं कलासहितं सत् सदाशिवस्वरूपेण मूर्तिः मूर्तिरिति उच्यते अभिधीयते ॥ ४३ ॥

सकलं निष्कलं चैव सकलस्वरूपं निष्कलस्वरूपं च मिलित्वा प्रभाव इति प्रभावनाम्ना कीर्तितम् कथितम् । देही नादस्वरूपं शिवतत्त्वम् निष्कल इत्युक्तः निष्कलमिति कथितम् । देहः देहस्वरूपाण्यक्षराणि सकल ईरितः सकलमिति कथ्यते ॥

---

(1) पद्यार्धमिदं क ट ठ ड ढ त. थ. द. ध. प ब. पुस्तकेषु दृश्यते
(2) मूर्तिरीरिता - ख ग. घ. झ.
(3) प्रभावं - क ख, ग च छ झ ट ठ, ड- ढ. त. थ. द. प. फ. ब.
(4) देही निष्कलमित्युक्तं - क. ख. ग घ च. झ. ड. ढ प.
निष्कलं जीवमित्युक्तम् - फ,
(5) सकलमीरितम् - क ख. ग. च. छ [ट. ठ. ड. ढ. प. फ.
सकल उच्यते - क घ , छ ट. ठ. ढ. त.

[1]देहिदेहसुसम्बन्धात् भावरूपमिति स्मृतम् ॥[2]

[ उक्तरूपाणां ध्यानाद्यङ्गत्वम् ]

सर्वेषां ध्यानपूजार्थं सकलं निष्कलं भवेत् ॥ ४५ ॥

[ उक्ततत्त्वानां उत्पत्ति-रूप-वर्णनिर्देशः ]

एवं तत्त्वविशेषेण[3] सर्वं कर्म समाचरेत् ।
पञ्चसादाख्यतत्त्वानां उद्भवं हि[4] पृथक् पृथक् ॥ ४६ ॥

---

**देहिदेहसुसम्बन्धत्** देहिनः देहस्य च सम्यक्सम्बन्धात् **भावरूपमिति** भावसादाख्यस्वरूपमिति **स्मृतम्** भवति । निष्कलरूपनादस्य सकलस्वरूपवर्णस्य च सम्बन्धात् सकलनिष्कलस्वरूपं भावसादाख्य भवतीति भावः । तत् शिवतत्त्वं **सर्वेषां** सर्वभक्तानां **ध्यानपूजार्थं** ध्यानार्थं पूजार्थं च **सकल निष्कलं भवेत्** सकलनिष्कलस्वरूपं भवति ॥ ४५ ॥

**एवं तत्त्वविशेषेण** उक्तप्रकारतत्त्वानुसारेण **सर्वं कर्म** ध्यानपूजादि-सकलकार्याणि **समाचरेत्** अनुतिष्ठेत् । हे ! षण्मुख ! हे ! षडानन ! **पञ्चसादाख्यतत्त्वानां** शिवसादाख्यादिकर्मसादाख्यान्तपञ्चसादाख्यतत्त्वानां **पृथक् पृथक्** प्रत्येकशः **उद्भवं हि** उत्पत्तिम्— ॥ ४६ ॥

---

(1) इत आरभ्य-'प्रत्यक्षं सर्वतोमुखम्' इत्यन्तो भागः ब. पुस्तके न दृश्यते ।
(2) "देही देहस्य सम्बन्धः एवंरूपमिति स्मृतम्" – क. ख. ग. घ. च. छ. झ. ट ठ८.
(3) एवं ज्ञात्वा विशेषेण – ख. ग. च झ, शिवतत्त्वविशेषेण – छ
(4) तु – ट.

[ पराशक्तिस्वरूपम् ]

**तेषां रूपं च वर्णं च समासात् शृणु षण्मुख! ।**
**शान्त्यतीता परा शक्तिः तस्याः पर्यायवाचकः ॥ ४७ ॥**

[ शिवसादाख्यस्वरूपम् ]

**पराशक्तेः[1] दशांशेन शिवसादाख्यसम्भवः[2] ॥**
**पराशक्त्युद्भवत्वाच्च शुद्धत्वात् शिवमीरितम्[3] ॥ ४८ ॥**

**प्रसादं सूक्ष्मरूपं च[4] ज्योतीरूपमिति स्मृतम् ।**

---

**तेषां** तत्त्वानां **रूपं** स्वरूपं **वर्णं** शुक्लादिवर्णं **च समासात्** संक्षेपेण **शृणु** अवधारय । **पराशक्तिः** पराशक्तिर्नाम निष्कलशक्तिरेव **शान्त्यतीता** भवति । एषः 'शान्त्यतीता'शब्दः **तस्याः** पराशक्तेः **पर्यायवाचकः** नामान्तरं भवति ॥ ४७ ॥

**पराशक्तेः** अस्याः पराशक्तेः **दशांशेन** दशमभागेन **शिवसादाख्य सम्भवः** शिवसादाख्यस्योत्पत्तिः भवति । **पराशक्त्युद्भवत्वाच्च** निष्कलारूप-पराशक्तेः अभिव्यक्तत्वात् अत एव **शुद्धत्वात्** परिशुद्धत्वाच्च **शिवं** शिव-सादाख्यमिति **ईरितं** कथितम् ॥ ४८ ॥

**प्रसादं** प्रसादमन्त्रमयं **सूक्ष्मरूपं च** व्योमातीतत्वात् **सूक्ष्मरूपं** इदं शिवसादाख्यतत्त्वं **ज्योतीरूपमिति** तेजःस्वरूपमिति **स्मृतं** चिन्तितं भवति ।

---

(1) शक्ति– घ. छ. ट. ठ. थ. द. ध
(2) ख्यमुद्भवम्– क ख. घ. छ. ट. ठ ड.
(3) शिवमुच्यते– क. ख. घ छ ट ठ ड ढ. त. द. ध. प. फ.
(4) तद्रूपं सूक्ष्मरूपेण– ख. ग, च. झ.
प्रसादे सूक्ष्मरूपम् च– ज.

विद्युद्रूपमिवाकाशे प्रत्यक्षं सर्वतोमुखम् ॥ ४९ ॥

[ अमूर्तसादाख्यस्वरूपम् ]

शिवतत्त्वमिदं[1] प्रोक्तं तत्त्वानामखिलालयम्[2]।
शिवसादाख्यमित्युक्तं[3] अमूर्तं तु[4] ततः शृणु[5] ॥ ५० ॥

---

**आकाशे** मेघावृते गगने **विद्युद्रूपमिव** विद्युल्लेखेव । मेघावृते आकाशे विद्युल्लता यथा मेघादाविर्भूय प्रकाशते ; अपि च मेघे एव तिरोधाय - प्रकाशते च ; एवं पुन पुनः आविर्भावतिरोभावाभ्यां सर्वजनगोचरागोचरतां यानती विद्युल्लतेव **सर्वतोमुखं** सर्वेषां प्राणिनां वाङ्मनोभावेषु **प्रत्यक्षं** पौनः पुन्येन आविर्भावतिरोभावाभ्यां गोचरागोचरीभूतम्— ॥ ४९ ॥

—**इद** शिवतत्त्वं शिवसादाख्यं तत्त्वं **तत्त्वानां** महदादिसमस्ततत्त्वानां **अखिलालयं** पूर्णाश्रयं इति **प्रोक्तम्** अभिहितम् । **इति** उक्तप्रकारेण **शिवसादाख्य** शिवसादाभिधानम् **तत्त्वं** **उक्त** अभिहितम् । ततः शिवसादाख्यतत्त्वश्रवणानन्तरं **अमूर्तं** **तु** अमूर्तसादाख्यतत्त्वं तु **शृणु** अवधारय ॥ ५० ॥

---

(1) मिति- ख ग च, झ

(2) श्रयम्- ठ.

(3) मेशोक्तं- .फ

(4) अमूर्तिं च- प.

(5) अमूर्तिं श्रृणु षण्मुख- फू.

शान्तिश्चादिशक्तिश्च[1] तस्याः पर्यायवाचकः ।
आदिशक्तेः[2] दशांशेन ह्यमूर्तस्य समुद्भवः[3] ॥ ५१ ॥

आदिशक्तेः अमूर्तत्वात्[4] अमूर्तं चेति[5] कीर्तितम् ।
अमूर्तत्वात्[6] कलाहीनं तद्रूपं लिङ्गवद्भवेत्[7] ॥ ५२ ॥

---

आदिशक्तिश्च पूर्वोक्तनिष्कलरूपादिशक्तिः शांतिरेव शान्तिकलेत्युच्यते। अयं शान्तिशब्दः तस्याः आदिशक्तेः पर्यायवाचकः नामान्तरं भवति । आदिशक्तेः उक्तादिशक्तेः दशांशेन दशमभागेन अमूर्तस्य अमूर्तसादाख्यस्य समुद्भवो हि उत्पत्तिः भवति हि ॥ ५१ ॥

आदिशक्तेः आदिशक्तिनाम्न्याः शक्तेः अमूर्तत्वात् मूर्तभिन्नस्वरूपतया तदुत्पन्नत्वया अमूर्तमिति अमूर्तसादाख्यमिति कीर्तितम् कथितम्--पूर्वोक्तं अमूर्तसादाख्यतत्त्वं अमूर्तत्वात् मूर्तिरहितत्वात कलाहीनं शांतिकलायुतमपि कलारहितमिव भवति, तद्रूपं तस्य अमूर्तसादाख्यस्य स्वरूपं लिङ्गवत् लिङ्गाकारं भवेत् भवतीति यावत ॥ ५२ ॥

---

(1) आदिशक्तिश्च शक्तिश्च– फ.
शांतिश्चैवादिशक्तिश्च - छ. ट. ड. ढ. त. थ. द. ध.
(2) शक्ति– ख. ग घ झ.
(3) अमूर्तं च समुद्भवं– क. ट. ड. त. थ.
अमूर्तं तु समुद्भवं– ठ. द. ध.
अमूर्तश्च समुद्भवा– प.
(4) आदिशक्तिरमूर्तत्वात् - ख ग. घ. ङ.,
आदिशक्तेरमूर्तित्वात् –फ.
(5) अमूर्तिश्चेति– फ.
(6) अमूर्तित्वात्– फ.
(7) लिङ्गमुद्भवम्– क. ख. (पा) थ. ट. ड. भ.

सूर्यकोटिप्रतीकाशं ज्योतिःस्तम्भाकृति स्थितम् ।
तस्याभ्यन्तर्गता मूर्तिः अमूर्तत्वादगोचरा[1] ॥ ५३ ॥

एतद्वै दिव्यलिङ्गं तु मूलस्तम्भ इहोच्यते ।
लिङ्गात्[2] सर्वं समुत्पन्नं लयं तस्मिन् प्रकीर्तितम्[3] ॥ ५४ ॥

---

तच्च लिङ्गं सूर्यकोटिप्रतीकाशं कोटिसूर्यवत् प्रकाशमानं ज्योतिःस्तम्भाकृति ज्योतिर्मयस्तम्भाकारं च स्थितम् अस्तीत्यर्थः। तस्य उक्तज्योतिर्मयलिङ्गस्य अभ्यंतर्गता अन्तरवस्थिता मूर्तिः घृतकाठिन्यसमाना शिवमूर्तिः अमूर्तत्वात् व्योमातीतस्वरूपतया अगोचरा चक्षुरादीन्द्रियैः अगम्यस्वरूपा भवति ॥ ५३ ॥

एतद्वै दिव्यलिङ्गं तु चक्षुराद्यगोचरं इदं दिव्यलिङ्गं इह एतत्पञ्चमादाख्यनिरूपणावसरे मूलस्तम्भः सर्वेषामादिस्तम्भः इति उच्यते अभिधीयते। लिङ्गात् अस्मात् ज्योतिःस्तम्भरूपात् लिङ्गात् सर्वं जगदिदं सर्वमपि समुत्पन्नं सञ्जातम्। अपि च सर्वमिदं जगत् तस्मिन् अस्मिन् मूलस्तम्भ एव लयं विलयं गच्छतीति प्रकीर्तितम् प्रकर्षेणाभिहितम् ॥ ५४ ॥

---

(1) अमूर्तादिन्द्रियैरुच्यते– ख. ग च.

(2) लिङ्गे–फ.

(3) लयं तत्रैव चोच्यते– फ.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[1]सृष्टिसंहारमेवोक्तं लिङ्गनाम्ना त्विहोच्यते।

[ मूर्तसादाख्यस्वरूपम् ]

अमूर्तमेवमाख्यातं[3] समूर्तं तु[4] ततः शृणु ॥ ५५ ॥

इच्छाशक्तिश्च विद्या च तस्याः[5] पर्यायवाचकः।
तच्छक्तेस्तु[6] दशांशेन मूर्त[7]सादाख्यसम्भवः[8] ॥ ५६ ॥

---

**सृष्टिसंहारं** सृष्टिसंहारद्वयोपेतं **उक्तमेव** पूर्वोक्तमूर्तसादाख्यमेव इह पञ्चसादाख्यनिरूपणावसरे **लिङ्गनाम्ना** लिङ्गाभिधानेन **उच्यते** अभिधीयते। **एवं** उक्तप्रकारेण **अमूर्तं** अमूर्तसादाख्यं **आख्यातं** निरूपितम्। **ततः** अमूर्तसादाख्यनिरूपणानन्तरं **समूर्तं तु** मूर्तसादाख्यं तु **शृणु** अवधारय ॥५५॥

**इच्छाशक्तिश्च** शिवस्य निष्कलस्वरूपा इच्छाशक्तिरेव **विद्या च** विद्याशक्तिरित्यभिधीयते। विद्येति शब्दः **तस्याः** इच्छाशक्तेः **पर्यायवाचकः** नामान्तरं भवति। **तच्छक्तेस्तु** निष्कलस्वरूपायाः इच्छाशक्तेः **दशांशेन** दशमभागेन **मूर्तसादाख्यसंभवः** मूर्तसादाख्यस्य उत्पत्तिः भवति ॥ ५२ ॥

---

(1) इदमर्धं क घ. छ. ट. ठ. ड. ढ. त. थ. द. ध. प. ब. पुस्तकेषु न दृश्यते।
(2) लिङ्गनामास्य चोच्यते- फ.
(3) अमूर्तिरेवमाख्याता- भ.
(4) समूर्ति - च. भ.
स ॱर्तिं तु- फ.
(5) तस्य- क. च. ङ भ.
(6) इच्छाशक्तेः-फ.
(7) मूर्ति- ध.
(8) श्रुतीरूपमिहोच्यते- ख ग ब.

इच्छाशक्तेः[1] गुणत्वाच्च तस्मान्मूर्तमुदाहृतम्[2] ।
मूर्तत्वाच्च[3] कलायुक्तं रूपं चेति प्रकीर्तितम् ॥ ५७

ज्वालाग्निसदृशप्रख्या[4] दिव्यलिङ्गाकृतिर्भवेत् ।[5]
तस्यार्धार्धैक[6]भागे तु[7] चैकवक्त्रसमन्वितम्[8] ॥ ५८ ॥

---

इच्छाशक्तेः पूर्वोक्तायाः इच्छाशक्तेः गुणत्वात् गुणभावात् तस्मात् गुणभावरूपकारणादेव मूर्तं मूर्तसादाख्यमिति उदाहृतं कथितं भवति । मूर्तत्वाच्च मूर्तिरूपत्वादेव कलायुक्तं विद्याख्यकलायुतं रूपं चेति स्वरूपं चेति प्रकीर्तितं अभिहितम् ॥ ५७ ॥

पूर्वोक्तमिदं रूपं ज्वालाग्निसदृशप्रख्या प्रज्वलदग्निसमानकांतिमती दिव्यलिङ्गाकृतिः दीप्तिमयशिवलिङ्गाकृतिः भवेत् भवति । तस्य पूर्वोक्त-दिव्यलिङ्गस्य अर्धार्धैकभागे तु चतुर्थभागे तु एकवक्त्रसमन्वितं एकवदन-सहितम् ॥ ५८ ॥

---

(1) शक्ति- क. घ. छ. द. ध. प. व.
(2) तस्मान्मूर्तिरुदाहृता- ख. ग च. झ
(3) मूर्तित्वाच्च- ध. ब.
(4) ज्वालाग्निसदृशप्रख्य- प.
(5) कृतिर्ध्रुवम्- ध.
(6) तस्योर्ध्वांशैक- ख. ग. च. झ.
(7) भागेन- क
(8) वक्त्रेण संयुतम् फ.

त्रिणेत्रं[1] चारुवदनं सर्वावयवसुन्दरम्[2] ।
[3]कृष्णापरशुहस्तं च वराभयचतुष्टयम् ॥ ५९ ॥

[4]एवंलक्षणसंयुक्तं लिङ्गमूर्तमुदाहृतम् ।
एवमेकाननोपेता[5] दिव्यलिङ्गाकृतिर्भवेत्[6] ॥ ६० ॥

---

त्रिणेत्रं नयनत्रयोपेतं चारुवदनं सुन्दराननं सर्वावयवसुन्दरं सर्वैरप्यवयवैः मनोहरं कृष्णापरशुहस्तं च हस्तद्वयेन हरिणीं परश्वधं च धारयमाणं वराभयचतुर्भुजम् पूर्वोक्तभुजद्वयेन वराभयमुद्रायुतभुजद्वयेन चाहत्य भुजचतुष्टयोपेतम् ॥ ५९ ॥

एवं उक्तरीत्या लक्षणसंयुक्तं सर्वलक्षणसंपन्नं लिङ्गमूर्तं लिङ्गरूपमूर्तसादाख्यमिति उदाहृतम् अभिहितम् । एवं पूर्वोदाहृतमूर्तसादाख्यरूपं एकाननोपेता एकाननयुता दिव्यलिङ्गाकृतिः दीप्तिमल्लिङ्गाकृतिः भवेत् भवति ॥ ६० ॥

---

(1) त्रिणयनं ट. ठ.
(2) संयुतम् ख. ग. घ. झ.
(3) इदमर्धं क. घ. छ. ट. ठ. ड. ढ. त. थ द. ध. प. ब. पुस्तकेषु न दृश्यते ।
(4) इदमर्धं क घ. छ. ट. ठ. ड. ढ. त. थ. द. ध. प. ब. पुस्तकेषु न दृश्यते ।
(5) एकमेकासनोपेतं– ख. ग. घ. झ.
एकमेकाननोपेतं– थ. द. ब.
(6) लिङ्गाकृतिरितीरिता– घ,
लिङ्गमूर्तिरुदाहृता– झ. (पा).

[ कर्तृसादाख्यस्वरूपम् ]

[1]मूर्त[2]सादाख्यमित्युक्तं[3] कर्तृसादाख्यमुच्यते ।
ज्ञानं चैव प्रतिष्ठा च[4] तस्य[5] पर्यायवाचकः ॥ ६१ ॥

ज्ञानशक्तेः[6] दशांशेन कर्तृसादाख्यसंभवः[7]
ज्ञानं कर्तृ[8]स्वभावत्वात् कर्तृनामेति कीर्तितम् ॥ ६२ ॥

---

इति पूर्वप्रतिपादितरीत्या मूर्तसादाख्यं मूर्तसादाख्यतत्त्व उक्तं अभिहितम् भवति । इतःपरं कर्तृसादाख्यं कर्तृसादाख्यरूपं उच्यते अभिधीयते । ज्ञानं चैव निष्कलस्वरूपज्ञानशक्तिरेव प्रतिष्ठा च प्रतिष्ठानाम्नी शक्तिर्भवति । प्रतिष्ठाशब्दश्च तस्य ज्ञानस्य ज्ञानशक्तेरिति यावत् पर्यायवाचकः नामान्तरं भवति ॥ ६१ ।

ज्ञानशक्तेः पूर्वोक्तज्ञानशक्तेः दशांशेन दशमभागेन कर्तृसादाख्य-संभवः कर्तृसादाख्यस्य प्रादुर्भावः भवति । ज्ञानं शिवस्य चिच्छक्तिः कर्तृस्वभावत्वात् स्वस्य जगन्निर्माणस्वभावतया कर्तृनामेति कर्तृसादाख्यमिति कीर्तितं अभिहितम् भवति ॥ ६२ ॥

---

(1) इदमर्धं- क ग. छ. ट. ठ. ड, त. थ. ध. प. पुस्तकेषु न दृश्यते।
(2) मूर्ति- ख. ग. च, झ.
(3) मेवोक्तं- फ.
(4) ज्ञानशक्तिः प्रतिष्ठा च- फ.
(5) तस्याः- ख ग. च. झ.
(6) शक्ति- ख. ग. च. झ.
(7) ख्यमुद्भवं क घ. छ ट ठ, ड. ढ. त. थ
(8) ज्ञानशक्ति- ध.

[1]ज्ञानं हि[2] शुध्दभावत्वात्[3] स्फाटिकाभास[4]मुच्यते ।
दिव्यलिङ्गं महास्थूलं महादीर्घतयाऽन्वितम् ॥ ६३ ॥

तस्य[5] मध्य[6]स्थिता मूर्तिः ईश्वरः सर्वकारणम् ।
चतुर्मूर्धं चतुर्वक्त्रं नेत्रद्वादशसंयुतम्[7] ॥ ६४ ॥

---

ज्ञानं हि इदं च कर्तृनामकं ज्ञानतत्त्वं शुध्दभावत्वात् शुद्धस्वभावतया स्फटिकाभासं स्फाटिकप्रभासदृशं उच्यते अभिधीयते । दिव्यलिङ्गं पूर्वोक्तस्फटिकप्रभासदृशं शिवलिङ्गं महास्थूलं स्थूलतमं महादीर्घतया अतिदैर्घ्येण अन्वितं सहितं च भवति ॥ ६३ ॥

तस्य तस्य शिवलिङ्गस्य मध्यस्थिता मध्यभागे वर्तमाना सर्वकारणं सर्वस्यापि कारणभूता मूर्तिः स्वरूपं ईश्वरः ईश्वरः इत्युच्यते पूर्वोक्तदिव्यलिङ्गमध्यस्थितमूर्तिस्वरूपं चतुर्मूर्धं चतुर्भिः शिरोभिः सहितं चतुर्वक्त्रं चतुर्भिराननैरुपेतं नेत्रद्वादशसंयुतम् द्वादशभिः नयनैः सहितम् । ६४ ।

---

(1) इदमर्धं ङ. प. पुस्तके न दृश्यते ।

(2) ज्ञानस्य– ध.

(3) शुध्दरूपत्वात्– ख. ग. घ झ.

(4) स्फटिकाभास– क. ठ.

(5) इदमर्धं ङ. प. पुस्तकयोः न दृश्यते ।

(6) मध्ये– ठ. ढ. त. द.

(7) चतुर्मूर्धचतुर्वक्त्रनेत्रद्वादशसंयुतम्– झ.

चतुरास्यचतुर्वर्णं वसुश्रोत्रसमन्वितम् ।
अष्टहस्तं द्विपादं च सर्वलक्षणसंयुतम्[1] ॥ ६५ ॥

शूलं परशुखड्गं चाप्यभयं दक्षिणे करे ।
पाशं नागं च घण्टां च वरदं वामहस्तके ॥ ६६ ॥

[2]सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ।

---

चतुरास्यचतुर्वर्णं चतुर्षु आननेषु क्रमेण चतुर्वर्णसहितम् वसुश्रोत्रसमन्वितम् वसुसंख्याकैः अष्टभिः कर्णैः सहितम् अष्टहस्तं अष्टभिः करैः समन्वितं द्विपादं द्वाभ्यां चरणाभ्यां उपेतं सर्वलक्षणसंयुतं च सर्वैः चिन्हैः सहितम् ॥ ६५ ॥

दक्षिणे करे दक्षिणभागस्थेषु चतुर्षु हस्तेषु क्रमेण शूलं त्रिशूलं परशुखड्गं च परश्वायुधं खड्गायुधं च अभयमपि अभयमुद्रां च बिभ्राणम् वामहस्तके वामभागस्थेषु चतुर्षु करेषु क्रमेण पाशं पाशायुधं नागं सर्पं घण्टां वरदं च वरदमुद्रां च बिभ्राणम् –

सर्वावयवसंयुक्तं सर्वैः अङ्गैः सहितं सर्वाभरणभूषितम् सकलालङ्कारैः अलङ्कृतं एवं एतादृशं तं ईश्वरं लिङ्गमध्यस्थितं ईश्वरं

---

(1) संयुक्तम् – छ. ध.
(2) इदमर्धं ढ. प. पुस्तकयोः न दृश्यते ।

'एवं तदीश्वरं विद्यात् कर्तृसादाख्यलिङ्गकम् ॥'[1][2] ६७ ॥

( कर्मसादाख्यस्वरूपम् )

कर्तृसादाख्यमित्युक्तं[3] कर्मसादाख्यमुच्यते ।
निवृत्तिः स्यात् क्रियाशक्तिः तस्याः पर्यायवाचकः ॥ ६८ ॥

क्रियाशक्तेः[4] दशांशेन कर्मसादाख्यसम्भवः ।[5]

---

कर्तृसादाख्यलिङ्गकं कर्तृसादाख्यलिङ्गमिति विद्यात् जानीयात् ॥ ६४, ६५, ६६, ६७ ॥

इति एवंप्रकारेण कर्तृसादाख्यं उक्तं भवति । इतःपरं कर्मसादाख्यं उच्यते अभिधीयते । क्रियाशक्तिः निष्कलक्रियाशक्तिः निवृत्तिः स्यात् निवृत्तिकलानाम्नी भवति । स निवृत्तिशब्दः तस्याः क्रियाशक्तेः पर्यायवाचकः नामान्तरं भवति ॥ ६८ ॥

क्रियाशक्तेः निष्कलक्रियाशक्तेः दशांशेन दशमभागेन कर्मसादाख्यसंभवः कर्मसादाख्यस्य उत्पत्तिः भवति । क्रिया निष्कल-

---

(1) इदमर्धं प पुस्तके न दृश्यते ।

(2) एवं तदीश्वरं प्रोक्तं कर्तृलिङ्गमिहोच्यते – क. ख. घ. छ. ट. ठ. ड. त. थ. द.

(3) कर्तृलिङ्गसमाख्येयं - घ.
कर्तृसादाख्यमेवोक्तं– फ.

(4) शक्ति– ख. ग. च. झ.

(5) ख्यमुद्भवम्– क. ख. ग. छ. ट. ठ. ड. ढ. त द. प. ब.
ख्यमुद्भवः– थ. फ

क्रियाकर्मेति[1] विज्ञेया[2] तस्मात् कर्मेति[3] नामतः ॥
लिङ्गपीठप्रकारेण कर्मसादाख्यलक्षणम् ॥ ६९ ॥

नादो[4] लिङ्गमिति ज्ञेयः[5] बिन्दुः पीठमुदाहृतः[6] ।
नादबिन्दुयुतं[7] रूपं लिङ्गाकारमिहोच्यते ॥[8] ७० ॥

---

क्रियाशक्तिः कर्मेति कर्मसादाख्यमिति विज्ञेया ज्ञातव्या तस्मात् तस्मादेव कारणात कर्मेति नामतः कर्माभिधानेन- लिङ्गपीठप्रकारेण लिङ्ग-पीठ-मन्त्रजातपटले यत पञ्चसादाख्यमुखं लिङ्गपीठं समस्ततत्त्वानां जन्म-स्थलमिति प्रख्यातम्, तत्प्रकारेण तद्रीत्या च कर्मसादाख्यलक्षणं कर्म सादाख्यस्वरूपं प्रसिध्दमस्तीति तत् उध्दृतमित्यर्थः ॥ ६९ ॥

नादः सृष्टिस्थितिलयकारणत्वलक्षितपतिनाम्ना प्रसिध्दं ब्रह्म लिङ्ग-मिति ज्ञातव्यः । बिन्दुः बिन्दुरूपं तु पीठं समस्तमन्त्रदेवताजन्म-स्थलं पीठमिति उदाहृतः कथितः । नादबिन्दुयुतं रूपं नादः शिवः, बिन्दुः शक्तिः, ताभ्यां युतं युक्तं स्वरूपं इह अस्मिन् तन्त्रे लिङ्गा-कारं उच्यते अभिधीयते ॥ ७० ॥

(1) कर्माणि- ङ.
(2) विज्ञेयं- क.
(3) कर्माणि - ङ.
(4) नादं- ख. ग. च. झ.
(5) ज्ञेयं- ख ग. च झ.
(6) मुदाहृतम्- ख. ग. च झ.
(7) बिन्दुनादयुतं- घ. च, ट. ठ. ड. ढ. त थ द. ध.
(8) मिति स्मृतम्- ख. ग. च झ.

[1]लयादिभेदः प्रागुक्तो य उपाधौ शिवस्य तु ।
स बिन्दुरिति मन्तव्यः[2] सैव[3] कुण्डलिनी मता ॥ ७१ ॥

चत्वारि कर्तृरूपाणि[4] केवलं नाद उच्यते[5] ।
लिङ्गं शिव[6] इति ज्ञेयः पीठं शक्तिरुदाहृतम् ।[7] ७२ ॥

---

शिवस्य शिवतत्त्वस्य उपाधौ यः लयादिभेदः सृष्टिस्थितिलयाख्य-भेदः प्रागुक्तः पूर्वं पतिस्वरूपनिरूपणावसरे प्रतिपादितः सः सृष्ट्यादिरेव बिन्दुः बिन्दुरिति मन्तव्यः ज्ञातव्यः । सैव सा बिन्दुरेव कुण्डलिनी मता कुण्डलिनी शक्तिरिति ज्ञाता भवति ॥ ७१ ॥

कर्तृरूपाणि कर्त्रादिरूपाणि शिवसादाख्यम, अमूर्तसादाख्यम, मूर्तसादाख्यम कर्तृसादाख्यं चेत्यर्थः । एतानि चत्वारि केवलं सादाख्य-चतुष्टयमात्रं नादः उच्यते नादब्रह्मेत्यभिधीयते शिवः नादब्रह्मरूपं शिव-तत्त्वं लिङ्गमिति ज्ञेयः लिङ्गस्वरूपमिति ज्ञातव्यः । शक्तिः ज्ञानशक्त्यादि चतुर्विधशक्तिः पीठमिति तस्य नादब्रह्मरूपलिङ्गस्य पीठमिति उदाहृता कथिता ॥७२॥

---

(1) अयं श्लोकः- ख. ग. घ. झ. फ. भ. पुस्तकेषु न दृश्यते ।
(2) मन्तव्यं- क घ. छ. ट ठ. ड. ढ. त. थ
(3) शैव- क. घ. छ. ट. ड. ढ.
(4) रूपादि- क. घ. छ ट. ठ. ड. ढ.
(5) नादमीरितं- ख. ग. छ. झ.
(6) शिवं- क. ग. घ. च छ" ट. ठ. ड ढ त थ प.
शम्भुः- प.
(7) रुदाहृता- ख. च ज द.

योनिलिङ्गप्रकारेण[1] जगत्सृष्ट्यर्थकारणम् ।
तथा[2] संयोगभावस्य[3] तत्त्वं कर्मेत्युदाहृतम्[4] ॥ ७३ ॥

बिन्दुमध्यगतो नादः[5] नादमध्ये तु मूर्तय ।
मूर्तिमध्यगतं तत्त्वं तत्त्वमध्यगत शिवः ॥ ७४ ॥

---

**योनिलि प्रकारेण** मन्त्रजातपटलोक्तपीठलिङ्गप्रकारेण **जगत्सृष्ट्यर्थकारणं** लोकोत्पत्तिकारणभूतं **तथा संयोगभावस्य** तथैव अविनाभावशिवशक्तिसंयोगभावस्य **तत्त्वं** स्वरूपं इह अस्मिन् मन्त्रे **कर्मेति** कर्मसादाख्यमिति **उदाहृतं** अभिहितम् ॥ ७३ ॥

**नादः** नादब्रह्मस्वरूपं शिवतत्त्वं **बिन्दुमध्यगतः** पूर्वोक्तबिन्दुनामकशक्तिमध्यगतो वर्तते । **मूर्तयस्तु** शिवमूर्तिभेदास्तु नादब्रह्मस्वरूपशिवतत्त्वमध्ये वर्तन्ते । **तत्त्वं** शिवशक्तिस्वरूपलिङ्गतत्त्वं **मूर्तिमध्यगतं** शिवमूर्तिमध्ये वर्तते । **शिवः** मन्त्रस्वरूपः शिवः **तत्त्वमध्यगतः** लिङ्गतत्त्वमध्ये वर्तते ॥ ७४ ॥

---

(1) नादबिन्दुप्रकारेण- ध.

(2) तदा- फ

(3) भावेन- ख. ग. च. ञ.
भावत्वात्- फ.

(4) कर्मरूपमुदाहृतम्- ख. ग. च. ञ. फ.

(5) गतं नाद- क घ. छ ट ठ. ड ढ त थ द प. ब

[1]शिवमध्यगतं नृत्तं नृत्तमध्ये तु शांतकम् ।
अतीतं शांतमध्ये तु शांत्यतीतं परात्परं ॥ ७५ ॥

एवं तत्त्वमयं[2] लिङ्गं सर्वतत्त्वालयं[3] विदुः ।
लिङ्गेन[4] जायते तत्त्वं[5] जगत् स्थावरजङ्गमम् ॥ ७६ ॥

---

नृत्तं ताण्डवनृत्तं, शिवमध्यगतं पूर्वोक्तलिङ्गमध्यस्थिते शिवे वर्तते । शान्तकं तु शांताख्यशक्तिस्वरूपं तु नृत्तमध्ये नृत्यस्यमध्यभागे भवति अतीतं शांतिशक्तेरपि मूलभूतं परात्परं सर्वशक्तीनामप्याधिभूतं शान्त्यतीत तु शांत्यतीतस्वरूपं तु शान्तमध्ये पूर्वोक्तशांतकस्य मध्ये वर्तते ॥ ७५ ॥

एवं उक्तप्रकारेण लिङ्गं शिवशक्तिसंयोगरूपशिवलिङ्गं तत्त्वमयं शिवशक्तिसम्भूतसमस्ततत्त्वस्वरूपं भवति । इदमेव लिङ्गस्वरूपं सर्वतत्त्वालयं महदादिसमस्ततत्त्वाश्रयं इति लिङ्गतत्त्वज्ञाः विदुः जानन्ति । लिङ्गेन अनेन शिवलिङ्गेन स्थावरजङ्गमं चराचरात्मकं जगत्तत्त्वं जगद्रूपं तत्त्वं जायते उत्पद्यते । ७६ ॥

(1) इदं पद्यं क. ख. छ. ट ठ ड. ढ त. भ. द. प. ब पुस्तकेषु न दृश्यते ।

(2) एतत्तत्त्वमयं– क. घ ट ठ. ड. ढ. त. थ. द. ध. प. ब.
एतच्छिवमयं– ख. ग. च. ज.

(3) तत्त्वाश्रयं– फ.

(4) लिङ्गे तु– ख. ग. च. झ.

(5) सर्वं– ख ग च. झ.
तत्र फ.

[1]तस्मात् लिंगं विशेषेण कर्मरूपमुदाहृतम् ।
कर्मोदये च सृष्टिः स्यात्[2] कर्मान्ते संहृतिर्भवेत् ॥ ७७ ॥

एतत्कर्मस्व[3]रूपं तु सृष्टिस्थितिलयावहम् ।[4]

] प्रकारान्तरेण कर्मसादाख्यनिरूपणम् ]

पञ्चसादाख्यमेवोक्तं[5] कर्म[6]सादाख्यमुच्यते ॥[7] ७८ ॥

---

तस्मात् स्थावरजङ्गमात्मकजगदुत्पत्तिहेतुत्वात् लिङ्गं शिवलिङ्गं विशेषेण विशेषतः कर्मरूपं कर्मसादाख्यं स्वरूपं इति उदाहृतं अभिहितम् । कर्मोदये च कर्मारम्भे सृष्टिः स्यात् जगदुत्पत्तिः भवति । कर्मान्ते कर्मावसाने संहृतिः भवति समस्तजगत्संहारः संभवति ॥ ७७ ॥

एतत्कर्मस्वरूपं तु अस्य कर्मसादाख्यस्य स्वरूपं तु सृष्टिस्थितिलयावहं सृष्टिस्थितिलयानां कारणं भवति । एतावत्पर्यन्तं पञ्चसादाख्यं शिवसादाख्यादिसादाख्यपञ्चकं उक्तमेव अभिहितमेव इदानीं कर्मसादाख्यं उच्यते अभिधीयते ॥ ७८ ॥

---

(1) इदमर्धं- ङ प पुस्तकयोः न दृश्यते।
(2) सृष्टिश्च- क. घ छ. ट. ठ. ड. ढ. त. प. ब.
(3) एतत्कर्मेश- च झ
एतत्कर्म च फ.
(4) लयान्वितं फ.
लयावहः- क.
(5) ख्ययोगेन- ग. च. ञ
(6) सर्व- ट.
(7) शिवरूपं समाश्रितम्- फ

शिवसादं विशेषेण शिवरूपं समाश्रितम् ।
'अमूर्तं[1] तु[2] महासेन ! शिवसादाख्यमाश्रितम् ॥ ७९ ॥

मूर्तरूपं[3] विशेषेण त्वमूर्तादि समाश्रितम् ।
[4]कर्तृसादाख्यमेवं हि समूर्तादि[5] समाश्रितम् ॥ ८० ॥

---

इतःपरं पूर्वोक्तपञ्चसादाख्यानां आश्रयाः अभिधीयन्ते । हे महासेन षण्मुख शिवसादं शिवसादाख्यं विशेषेण विशेषतः शिवरूपं शिवतत्त्वस्वरूपं समाश्रितं आश्रित्य वर्तते अमूर्तं तु अमूर्तसादाख्यं तु शिवसादाख्यं आश्रितं आश्रित्य वर्तते ॥ ७८ ॥

मूर्तरूपं मूर्तसादाख्यरूपं विशेषेण तु विशेषतः अमूर्तादिसमाश्रितं अमूर्तादिसादाख्यान्याश्रित्य वर्तते । एवं हि उक्तरीत्या हे कर्तृसादाख्यं समूर्तादि समाश्रितम् मूर्तादिसादाख्यं आश्रित्य वर्तते ॥ ८० ॥

---

(1) इदमर्धं- ध. पुस्तके न दृश्यते ।

(2) अमूर्ति- प.

(3) हि- फ.

(4) मूर्तिरूपं- प. ब.

(5) इदमर्धं- ध. ब पुस्तकयोः न दृश्यते ।

(6) समूर्त्यादि- क. छ. त. थ. प.
स्वमूर्त्यादि- ट.

[1]कर्मरूपं क्रमेणैव कर्त्रादि तु समाश्रितम् ।
अनेनैव प्रकारेण[2] चैकैकं[3] तु समाश्रितम् ॥ ८१ ॥

तस्मात् कर्मस्वरूपं तु[4] पञ्च[5]तत्त्वाश्रितं विदुः ।

---

कर्मरूपं कर्मसादाख्यरूपं क्रमेणैव पूर्वोक्तसादाख्यक्रमेणैव कर्त्रादि तु समाश्रितं कर्त्रादिसादाख्यं आश्रित्य वर्तते । अनेनैव प्रकारेण अनयैव रीत्या एकैकं तु एकैकं सादाख्यं समाश्रितं पूर्वपूर्वसादाख्यं आश्रित्य वर्तते ।

तद्यथा शिवसादाख्यं लिङ्गतत्त्वं, अमूर्तसादाख्यम् शिवसादाख्यं लिङ्गतत्त्वं च, मूर्तसादाख्यं अमूर्तसादाख्यं शिवसादाख्यं लिङ्गतत्त्वं च, कर्तृसादाख्यं मूर्तसादाख्यं शिसादाख्यं लिङ्गतत्त्वं च, कर्मसादाख्यं कर्तृसादाख्यं मूर्तसादाख्यं अमूर्तसादाख्यं शिवसादाख्यं लिङ्गतत्त्वं च, समाश्रित्य वर्तन्ते ।

तस्मात् पूर्वोक्तकारणादेव कर्मस्वरूपं तु कर्मसादाख्यस्वरूपं तु पञ्च तत्त्वाश्रितं शिवसादाख्यादिपञ्चतत्त्वानि आश्रित्य वर्तते इति विदुः जानन्ति । एवं कर्मसादाख्यकारणेन सर्वतत्त्वात्मकं सर्वतत्त्वस्वरूपं इति ज्ञेयं ज्ञातव्यम्।

---

(1) इदं अर्धं फ पुस्तके न दृश्यते ।
(2) क्रमेणैव– फ.
(3) एकैकं– क. घ. छ. ट. ठ. ड. द प. ब.
(4) कर्मशरूपं तु– झ.
(5) मूर्ति– फ.
(6) अर्थं– द

सर्वं[2]तत्त्वात्मकं ज्ञेयं तत्त्वा[3]धारमिति स्मृतम् [1]॥ ८२ ॥

एतद्धि कर्मसादाख्यं पिण्डरूपमिहोच्यते ।[4]
पिण्डस्थं पिण्डमध्यस्थं पिण्डेन तु घटीकृतम्[5] ॥ ८३॥

---

अपि च एतदेव कर्मसादाख्यतत्त्वं तत्त्वाधारं शिवाद्यवनिपर्यन्तानां समस्ततत्त्वानां आश्रयः इति स्मृतं ज्ञायते इत्यर्थः ॥८२॥

एतद्धि कर्मसादाख्यं इदमेव कर्मसादाख्यं तत्त्वं इह अस्मिन् तन्त्रे पिंडरूपं पिण्डस्वरूपं देहस्वरूपमिति उच्यते अभिधीयते । पिंडस्थं पिण्डरूपेण तिष्ठतीति पिण्डस्थं मन्त्ररूपं शिवतत्त्वं अस्मिन् कर्मसादाख्य-रूपलिङ्गमध्ये वर्तते । अतः इदं पिण्डमित्युच्यते । पिण्डमध्यस्थं मूर्त-रूपपिण्डमध्ये तिष्ठतीति पिण्डमध्यस्थं पिंडेन तु घटीकृते यथा यथा पूर्वतनमृत्पिण्डात् घटः जायते तथा इदमपि कर्मसादाख्यं क्रियाशक्तेः जायते इत्यर्थः ॥८३॥

---

(1) पञ्च- ख. ग. च. झ.

(2) सर्वां- ख. ग. च झ.

(3) धारसत्ताश्रयम्- क. ख. ग घ. च. छ. झ

(4) एतद्धि मूर्तिपिण्डत्वात् पिण्डकायमिति स्मृतम्- ख. ग. झ.
एतद्धि मूर्तिपिण्डत्वात् पिण्डकाय इति स्मृतः- च

(5) पुटीकृतम्- ख. ग. च. झ.

पिंडेन पिंडितं पिंडं पिंडरूपमुदाहृतम्।
(1)अतीतकाले मृत्पिंडं रूपं कुम्भे व्यवस्थितम् ॥ ८४ ॥

पश्चात्मकमभूत् पिंडं धातुबद्धगुणात्मकम्।
(2)तस्माद्वै कर्मसादाख्यं पिंडरूपमुदाहृतम् ॥

---

इदं च कर्मसादाख्यं **पिंडेन** प्राक्तनक्रियाशक्त्यात्मकपिण्डेन **पिंडितं** पिण्डीकृतं वर्तते। पुनरत्र शिवाद्यवनिपर्यंततत्त्वानां इदं कर्मसादाख्यं **पिंडरूपमुदाहृतम्** पिण्डरूपमिति कथितम्। तद्यथा **अतीतकाले** घटपूर्वकाले **यत् मृत्पिंडं** मृत्पिण्डात्मकं **रूपं** स्वरूपं अस्ति न् **तदेव कुम्भे** घटे **व्यवस्थितं** घटाकारेण परिणतं इत्यर्थः ॥८४॥

**धातुबध्दगुणात्मकं** रक्तादिसप्तधातुभिः निबद्धैः गुणैः उपेतम्, पश्चात्मकं पृथिव्यादिपञ्चभूतस्वरूपं सृष्टिकाले पिंडं **अभूत्। तस्माद्वै** पूर्वोक्तपिण्डोत्पत्तिक्रियानुरोधेन **वै कर्मसादाख्यं** कर्मसादाख्यात्वं पिंडरूपं देहरूपमिति उदाहृतं कथितम् ॥८५॥

---

(1) इदमर्धं - ग च झ. पुस्तकेषु न दृश्यते

(2) 'तस्माद्वै' इत्यारभ्य 'विदुः' इत्यन्तो भागः ड. द. पुस्तकयोः न दृश्यते ।

[1]एतत् शिवमय पिंडं सर्वतत्त्वालयं[2] विदुः।
पञ्चमूर्तिमयं देहं[3] पञ्चतत्त्वात्मकं भवेत् ॥८६॥

[4]मूर्तीनां देहभेदैश्च[5] गुणैः पञ्चाननं विदुः[6]।
[7]तत्तद्धेतु[8]महेशादि सर्वतत्त्वसमुद्भवः[9] ॥ ८७ ॥

---

एतत् शिवमयं पूर्वोक्तशिवलिङ्गतत्वात्मकं पिण्डं देहरूपं **सर्वतत्त्वालयं** समस्ततत्त्वानां आश्रयं **विदुः** जानन्ति। **पञ्चमूर्तिमयं** पञ्चमूर्तिस्वरूपं **देहं** कर्मसादाख्यपिण्ड पञ्चमूर्तिमयत्वादेव **पञ्चतत्त्वात्मकं** पञ्चतत्त्वस्वरूपं **भवेत्** भवति इत्यर्थः ॥८६॥

पूर्वोक्तकर्मसादाख्यमेव **मूर्तीनां** शरीरिणा महेशादिनां **देहभेदैः** भिन्नाभिन्नदेहैः **गुणैश्च** भिन्नाभिन्नगुणैश्च **पञ्चाननं** पञ्चवक्त्रं **विदुः** जानन्ति अस्मादेव कर्मसादाख्यात **तत्तद्धेतुमहेशादिसर्वतत्त्वसमुद्भवः** तत्तत्कारणकानां महेश्वरचन्द्रधरादीनां समस्तानामपि तत्त्वानां समुत्पत्तिः भवति ॥८७॥

---

(1) इदमर्धं– क. घ. छ. ट. ठ. ढ त. थ. द ब. पुस्तकेषु न दृश्यते।
(2) तत्त्वाश्रयं– फ.
(3) देवं– क. ख. ग. घ. च. छ. झ. ट ठ ड. ढ द. ध.
(4) मूर्तानां– ट. ब.
(5) देहभेदस्तु– ठ.
देहभेदैस्तु- ख ग च झ
(6) पञ्चाननैर्युतन्–क ठ प.
(7) इदमर्धं– ड ध पुस्तकयोः न दृश्यते।
(8) तद्देहं तु– ख. ग च. झि.
(9) सर्वतत्त्वादिसम्भवः– ख ग च .

[1]तस्य वक्त्रेषु[2] संभूताः सिद्धान्ताः शैवतन्त्रकाः ।
तत्त्वार्धे तु महेशादि सर्वतत्त्वसमुद्भवः ॥[3] ८८ ॥

[ शिवलिङ्गे ईशानरूपकर्मेशतत्त्वध्यानविधिः ]

सर्वज्ञानमयं देवं[4] सर्वकारणकारणम् ।
एव लिङ्गे तु[5] कर्मेशं ध्यायेत् सकलनिष्कलम् ॥८९॥

---

तस्य कर्मसादाख्यशिवतत्त्वस्य वक्त्रेषु आननेषु शैवतन्त्रकाः शैवतन्त्रसंज्ञकाः सिध्दान्ताः सम्भूताः प्रादुर्भूताः तत्वार्धे तु तस्मिन् कर्मसादाख्य शिवतत्त्वे तु महेशादिसर्वतत्त्वसमुम्दवः महेश्वरादिपञ्चविंशतितत्वानां समुत्पत्तिः भवति ॥८८॥

एवं उक्तप्रकारेण लिङ्गे तु शिवलिङ्ग एव सर्वज्ञानमयं समस्तज्ञानस्वरूपं सर्वकारणकारणं सर्वेषां कारणानामपि कारणभूतं आदिकारणमित्यर्थः सकलनिष्कलं सकलनिष्कलात्मकं कर्मेशं देवं ईशानाख्यमहादेवं ध्यायेत् चिन्तयेत । ८७॥

---

(1) इदमर्धं- क ग. छ ट ठ. त. थ. पुस्तकेषु न दृश्यते ।
(2) वक्त्रे तु- फ.
(3) सिध्दान्तादीनि पंज्ञकाः- फ.
सिध्दान्ताः शैवतान्त्रिकाः- ख. ग. च. झ.
(4) देहं- प.
(5) लिङ्गं- तु- ख. ग. च. .

देहस्थं सकलं ज्ञेयं निष्कलं देहवर्जितम् ।[1]
देहस्य तत्कलाभेदः धातुपिण्डः इति स्मृतः ॥[2]

षट्कलाश्चैव शास्त्रज्ञः[3] षडङ्गेषु[4] प्रकल्पयेत् ।
सर्वाङ्गैरपि[5] सम्पूर्णं[6] सर्वावयवसुन्दरम् ॥

---

देहस्थं पञ्चविंशतिलीलामूर्त्यन्तर्गतशिवतत्त्वं सकलं कलोपेतं ज्ञेयम् ज्ञातव्यम् । देहवर्जितं एतद्देहविरहितं परात्परं शिवतत्त्वं निष्कलं कलारहितं ज्ञेयं ज्ञातव्यम् । देहस्य शिवलीलामूर्तेः तत्कलाभेदः तस्याः पराशक्तेः कलानां शान्त्यतीतादिकलानां भेदः धातुपिण्ड इति रक्तादिसप्तधातुपिण्डः इति स्मृतः चिन्तितः ॥

शास्त्रज्ञः शिवतन्त्राभिज्ञः षट्कलाश्चैव शान्त्यतीतादिषट्संख्याककलाः षडङ्गेषु हृदयाद्यस्त्रान्तेषु षट्सु शिवाङ्गेषु मन्त्रमूर्तेः शिवस्य हृदयाद्यस्त्रान्ताः षण्मन्त्राः षडङ्गानि भवन्ति इति प्रकल्पयेत् भावयेत् । इदं च रूपं सर्वाङ्गैरपि समस्तशिवाङ्गैरपि सम्पूर्णं समग्रं अतएव सर्वावयवसुन्दरम् सर्वाङ्गैरपि मनोहरं भवति ॥९८॥

---

(1) देहस्थः सकलो ज्ञेयः निष्कलो देहवर्जितः– ङ.
(2) देहस्थेनत्कलोपेतं धातुपिण्डमिति स्मृतम्– ख. ग. घ. ङ.
(3) धात्रीश्च– ख. ग. घ. ङ.
(4) षडङ्गे तु– प.
षडङ्गेषु– ख. ग. च.
षडङ्गैश्च– ध.
(5) सर्वाङ्गानि– च. क. छ. ट. ड. ढि. त. थ. द. प. फ.
(6) संयुतम्– क. ध. छ. ट. ड. ढ. ड. ज. भ. द. प. फ. ब.

[1]एवं तत्स्मृति[2]मात्रेण मूर्ति[3] सकलरूपधृत् ।[4]
निष्कलं तदभावे तु[5] तस्मात्[6] सकलनिष्कलम् ॥

सवीर्यं चैव[7] निर्देहं मांसास्थिरुधिरं न च ।[8]
इन्द्रचापमिवाकाशे दर्पणे प्रतिबिम्बवत् ॥

---

**एवं** पूर्वोक्तरीत्या **स्मृतिमात्रेण** तेषां सर्वावयवानां स्मरणमात्रेण तत् कर्मसादाख्यतत्त्वं **सकलरूपधृत्** सत् सर्वावयवोपेतं सत् मूर्तिः साकारं भवति, सकलं भवतीत्यर्थः । **तदभावे तु** ध्यानावस्थायां वर्तमानानां योगिनां पूर्वोक्तावयवस्मृत्यभावात् तत् कर्मसादाख्यतत्त्वं **निष्कलं** भवति । **तस्मात्** सावयवत्वनिरवयवत्वहेतोः कर्मसादाख्यतत्त्वं **सकलनिष्कलं** सकलस्वरूपं निष्कलस्वरूपं च भवति ॥

**सवीर्यं चैव** वीर्यसहितमपि **निर्देहं** देहरहितं अपि च **मांसास्थिरुधिरं न च** मांसास्थिरुधिरैः रहितं च, इदं कर्मजतत्त्वं **आकाशे** मेघावृते गगने **इन्द्रचापमिव** इन्द्रधनुरिव योगिनां हृदयाकाशे **दर्पणे प्रतिबिम्बवत्** मुकुरे प्रतिबिम्बमिव योगिनां ध्यानदर्पणे प्रतिभासते ॥ ९३ ॥

---

(1) इदं पद्यं ड. प पुस्तकयोः न दृश्यते ।
(2) एतत्संसृति- ध.
एवं तु स्मृति फ.
(3) मूर्तं- क. घ. छ. ट. ठ. ड त. थ. द. ध. न.
(4) धृक्- ख. ग. च. ञ.
(5) तदभावेन- फ
(6) तत्स्यात्- ख ग. च. छ.
(7) वे च- क. ट. ठ प.
(8) रुधिराणि च- ख. ग. च. छ

[1]इत्येतन्मनसाऽऽकल्प्य सकलं निष्कलं भवेत् ।

[ अङ्गभेदनिरूपणम् ]

ध्यानलक्षणमित्युक्तं[2] अङ्गभेदस्तथोच्यते[3] ॥ ९४ ॥

[ अङ्गस्य चतुर्धा विभागः ]

अङ्गभेदो[4] महासेन ! चतुर्भिर्भेद[5] उच्यते ।[6]
अङ्गं प्रत्यङ्गसाङ्गं चोपाङ्गं चत्वारि च क्रमात् ॥ ७५ ॥

---

इति उक्तप्रकारेण मनसा चित्तेन आकल्प्य संभाव्य एतत् इदं क्रमतत्त्वं सकलं निष्कलं भवेत् सकलरूपेण निष्कलरूपेण च वर्तते इति भावः । एवं क्रमेण तत्त्वस्य सकलनिष्कलस्वरूपं निरूप्य इदानीं अङ्गभेदान् निरूपयति ध्यानेति इति एवं प्रकारेण ध्यानलक्षणं ध्यानस्वरूपं उक्तं अभिहितम् । अथ तु अनन्तरं तु अङ्गभेदः उच्यते अङ्गप्रत्यङ्गादिभेदः अभिधीयते ॥९४॥

हे महासेन हे षण्मुख! अङ्गभेदः अवयवभेदः चतुर्भिः प्रकारैः भेदः भिन्नः उच्यते अभिधीयते । तथा क्रमात् क्रमेण अङ्गं प्रत्यङ्गं साङ्गं उपाङ्गं चेति चत्वारि चतुष्टसंख्याकानि भवन्ति ॥९५॥

---

(1) इदं पद्यं- ङ प पुस्तकयोः नदृश्यते ।
(2) मेवोक्तं- प फ
(3) अङ्गानाथतथोच्यते- ख. ग. च. झ
(4) भेदं- क. घ. छ. ट. ठ ढ त. थ. प.
(5) भेदं- क. घ. छ. ट. ड. ढ. त. थ.
(6) अङ्गभेदमिदं प्रोक्तं तश्चतुर्विधमुच्यते- फ

[ तत्र प्रथमं अङ्गम् ]

शिरो वक्त्रं च हृदयं अङ्गञ्चेति प्रकीर्तितम् ।

[ द्वितीयं प्रत्यङ्गम् ]

मध्यः[1] कण्ठस्तथा बाहू नाभिः गुह्योदरं तथा[2] ॥ ९६ ॥

नेत्रे नासा च कर्णौ च पाणी पादौ[3] तथाऽङ्गुलिः ।
ऊरू च जानु जङ्घा च प्रत्यङ्गं चेति कीर्तितम्[4] ।९७॥

---

शिरः शीर्षं वक्त्रं मुखं हृदयं चेति एतत् त्रयं अङ्गमिति अङ्गनाम्ना प्रकीर्तितं परिभाषितम् । मध्यः कटिः कण्ठः गलः, तथा बाहू नाभिः नाभिप्रदेशः तथा गुह्योदरं गुह्यस्थाने उदरभागश्च ॥९६॥

–च नेत्रे नयने, नासा च नासिका च, कर्णौ च, पाणी पाणिद्वयं पादौ पादद्वयं तथा अङ्गुलिः अङ्गुलयश्च, ऊरू च ऊरुद्वयं च, जानु जानुद्वयं जङ्घा च जङ्घाद्वयं चेत्येतदवयवजातं प्रत्यङ्गमिति प्रत्यङ्गनाम्ना कीर्तितं परिभाषितम् ॥९७॥

---

(1) मध्य- क. ख. छ. ट. ड. ढ. त. थ.

(2) वक्षः कण्ठः स्तनौ बाहुनाभिगुह्योदराणि च- ख. ग. च झ.

(3) पाणिपादौ- ख. ग. च. झ.

(4) चेति चेष्यते- फ.

[ तृतीयं साङ्गं गुणरूपम् ]

मूर्तं च[1] गुणरूपं तु[2] साङ्गं चेति प्रकीर्तितम् ।

[गुणानां दशधा विभागः ]

गुणचिह्नमिति[3] ज्ञेयं तद्गुणो दशधा[4] भवेत् ॥ ९८ ॥

त्रिगुणं कर्तृप्रतापं[5] दुर्भेद्योऽनुग्रहस्तथा[6] ।
विधिर्माया विवर्णं च वर्णं[7] संहार एव च ॥ ९९ ॥

---

मूर्तं च साकारं यत् गुणरूपं तु गुणस्वरूपं तु तत् साङ्गमिति प्रकीर्तितम् गुणचिन्हं गुणानां लक्षणं इति वक्ष्यमाणप्रकारेण ज्ञेयं ज्ञातव्यम् । तद्गुणः स च गुणः दशधा दशप्रकारः भवेत् भवति ॥

त्रिगुणं गुणत्रयं कर्तृप्रतापं कर्ता कर्त्राख्यगुणः प्रतापश्च दुर्भेद्यः तथा अनुग्रहः विधिः माया विवर्णं च वर्णं संहार एव च संहारश्च॥९९॥

---

(1) मूर्तीनां- ख. ग. घ. ञ.
मूर्ति- च. प.

(2) च- फ. वर्जं

(3) गुणभिन्नमिति- क. घ. छ. ट. ठ. ड. ढ. त थ. द. ध. ब.

(4) तद्गुणस्तु तथा- क. घ. ट ढ ड. ढ. त. थ. द. ध. ब.

(5) शक्तिखण्डं च- ख. ग. च. छ. कर्तृप्रतापश्च-द.

(6) द्यानुग्रहं तथा- क. घ. छ. ट. ठ. ड. ढ त. थ. ध. प. ब.

(7) वर्णाः - ख. ग च.

[ तेषां गुणानां स्वरूपविवरणम् ]

एते दश गुणाः प्रोक्ताः तेषां लक्षणमुच्यते ।
त्रिगुणं शीलमित्युक्तं कर्ता परशुरुच्यते[1] ॥ १०० ॥

खड्गस्त्वीश[2]प्रतापः[3] स्याद् दुर्भद्यो वज्रमिष्यते ॥
ईशस्यानुग्रहश्चैव[4] त्वभयं तु प्रशस्यते ॥ १०१ ॥

---

एते पूर्वोक्ताः दश दशसंख्याकाः गुणाः त्रिगुणादयः प्रोक्ताः समुदीरिताः । इदानीं तेषां गुणानां लक्षणं स्वरूपं उच्यते । त्रिगुणं सत्वरजस्तमोरूपगुणत्रयं शूलं त्रिशूलं इति उक्तम् अभिहितम् । कर्ता शिवभक्तानां भवारण्यच्छेदको गुणः परशुः परश्वायुधमिति उच्यते· अभिधीयते ॥१००॥

ईशप्रतापस्तु कर्मेशाख्यस्य ईशस्य परमेश्वरस्य प्रतापरूपो गुणस्तु खड्गःस्यात् खड्गायुधं भवति । दुर्भेद्यः केनाप्यभेद्यत्वात् दुर्भेद्याख्यो गुणः वज्रं इष्यते वज्रायुधं भवति । ईशस्य अनुग्रहश्चैव स्वभक्तानुग्रहाख्यो गुणः अभयं तु अभयमित्येव प्रशस्यते कीर्त्यते ॥१०१॥

---

(1) शक्तिः परशुरीरितः– ख. ग. च. झ.

(2) खड्गं स्वीश– ख. ग. च.

(3) प्रतापं– क. ठ. द. प. ब.

(4) हं चैव– क घ. छ, ट. ठ. ड. ढ. त. थ द. प. फ. ब.

विधिः[1] स्यात् नागरूपं तु पाशो मायास्वरूपकः[2]।
द्विवर्णमङ्कुशं[3] चैव वर्णं नादात्मकं[4] विदुः ॥ १०२ ॥

संहारस्त्वग्निरूपः[5] स्यात् तेषां आख्याः प्रकीर्तिताः[6]।
एतानि गुणरूपाणि[7] साङ्गानि च यथाक्रमम्[8] ॥ १०३ ॥

---

विधिस्तु भोक्तृभाग्यनियतिस्तु नागरूपं स्यात् फणिरूपं भवति। मायास्वरूपकः मायाख्यगुणस्तु पाशः पाशायुधं भवति। द्विवर्णं लेखनाद्दृष्टं समुद्रमेघादिध्वनिं अंकुशं चैव अङ्कुशायुधं विदुः जानन्ति, वर्णं लेखनाद्दृष्टं अकाराद्यक्षरं नादात्मकं नादस्वरूपं विदुः जानन्ति ॥१०२॥

संहारस्तु शिवस्य लीलावसाने जगल्लयावहः संहाराख्यगुणस्तु अग्निरूपः शिवहस्ते वर्तमानाग्निस्वरूपः स्यात्। इत्थं तेषां त्रिगुणादीनां आख्याः नामानि प्रकीर्तिताः अभिहितानि। एतानि इमानि गुणरूपाणि त्रिगुणाद्यभिव्यञ्जकत्रिशूलादीनि यथाक्रमं क्रमशः साङ्गानि च साङ्गसंज्ञानि च भवन्ति ॥

---

(1) ऋध्दिः– फ.
(2) पाशं मायास्वरूपकम्– क. ख. ग. च. छ. झ. ट. ठ. ढ. त. थ. फ
(3) मंगुलिं– ड.
(4) सादात्मकं– ख. ग. च. छि
(5) संहारमग्निरूप– क. घ छि. ट. ठ. ड ढ त. थ द. ध. प. ब.
(6) येषां नामानि कीर्तिताः– क घ. छि. भ ट.
पाशानां भस्मसात्कृतिः– ख. (पा) झ. (पा)
पाशानां भस्मसात्कृतम्– फ.
(7) एतेवै गुणरूपं– च– फ.
(8) साङ्गश्चेति प्रकीर्तितः–फ.

[ चतुर्थं उपाङ्गम् ]

वस्त्रोपवीतमाल्यानि[1] गन्धाश्चाभरणं[2]तथा[3]।
तथैवावरणं[4] चैव ह्युपाङ्गं चेति कीर्तितम्[5] ॥ १०४ ॥

[ ध्यानार्हसदाशिवस्वरूपम् ]

[6]अङ्गभेदस्त्विति प्रोक्तः[7] तत्स्वरूपमिहोच्यते[8] ।

---

वस्त्रोपवीतमाल्यानि वस्त्रं उपवीतं माल्यं चेत्येतानि, गन्धाश्च तथा आभरणं तथैव आवरणं चेति एतत्सर्वं उपाङ्गमिति उपाङ्गनाम्ना कीर्तितं अभिहितम् ॥१०४॥

इति उक्तरीत्या अङ्गभेदस्तु अङ्गप्रत्यङ्गादिभेदस्तु प्रोक्तः अभिहितः। इह अङ्गप्रत्यङ्गादिभेदनिरूपणानन्तरं इदानीं तत्स्वरूपं पूर्वोक्तध्यानार्हसदाशिवस्वरूपं उच्यते अभिधीयते । तद्यथा कुन्दकुन्देन्दुस्फटिकाभासं कुन्दकुन्द

---

(1) वस्त्रोपवीतमाल्यं च- क घ ड.
वस्त्रोपवीतं माल्यं च- ट ठ. त. द.
(2) गन्धमाभरण- क. ग. घ. ट ठ. द. ध. प. फ.
(3) यथा- क. ड त द ब.
(4) अथैवावरणं- ध.
आसनावरणं- फ.
(5) ङ्ग प्रोच्यतेऽपि च- ग्र ग घ ङ.
ङ्ग चेति प्रोच्यते- ख. (पा) घ. छ ट. ठ ड. ढ. त ब.
(6) इदमर्धं "ड" पुस्तके न दृश्यते
(7) अङ्गभेदमिति प्रोक्त- ख ग. घ ङ.
अङ्गभेदमिदं प्रोक्तं- क ख (पा) घ. छ. ठ ढ. त. थ. द. फ. ब.
(8) तस्य रूपमिहोच्यते- ख. ग च. ङ.

कुन्देन्दुस्फटिका[1]भासं जटामकुटमण्डितम् ॥ १०५ ।

पञ्चमूर्ध[2]समायुक्तं पञ्चवक्त्रसमायुतम् ।
[3]प्रतिवक्त्रं विशेषेण त्रिलोचनसमायुतम् ॥ १०६ ॥

दिग्भुजं तु महासेन ! द्विपादं पद्मसंस्थितम् ।[4]
शूलं परशुखड्गौ चाभयवज्रे च दक्षिणे ॥ १०७ ॥

---

कुसुम-चन्द्र-स्फटिकशिलासदृशकांतिविशिष्टं, जटामकुटमण्डितम् जटयैवाकलितेन किरीटेनालंकृतम् –॥१०५॥

पञ्चमूर्धसमायुक्तं पञ्चभिः उत्तमाङ्गैः उपेतम्, पञ्चवक्त्रसमायुतं पञ्चभिराननैः सहितम्, विशेषेण विशेषतः प्रतिवक्त्रं एकैकमपि मुखम्, त्रिलोचनसमायुत नयनत्रयेण भूपितम्– ॥१०६॥

हे महासेन! हे षण्मुख! दिग्भुजं दिक्संख्याकभुजम्, दशभिः बाहुभिः उपेतमिति यावत, द्विपादं पादद्वयोपेतम्, पद्मसंस्थितम् पद्मासनासीनम्, दक्षिणे दक्षिणभागस्थेषु पञ्चसु भुजेषु शूलं त्रिशूलं परशुखड्गौ च परशुखड्गौ च अभयवज्रे च अभयमुद्रां वज्रायुधं च धारयमाणम् –॥१०७॥

---

(1) स्फाटिका- ख. ग. घ. छ झ. द. ब.
(2) मूर्ध्ना- ध. फ. व.
(3) इदमर्धं क. घ. पुस्तकयोः न दृश्यते ।
(4) वक्त्रं प्रति– छ.
(5) वज्राभयं च– फ

नागं पाशाङ्कुशं चैव घण्टां वह्निं च वामके ।
सर्वलक्षणसंयुक्तं[1] सर्वाभरणभूषितम् ॥ १०८ ॥

दिव्याम्बरधरं देवं दिव्यरूपमुदाहृतम् ।
[2]दिव्यगन्धानुलिप्ताङ्गं दिव्यमालाविभूषितम् ॥ १०९ ॥

---

वामके वामभागावस्थितेषु पञ्चसु हस्तेषु नागं सर्पं पाशाङ्कुशं चैव पाशं अङ्कुशं च घण्टां वह्निं च अग्निं च धारयमाणं, सर्वलक्षणसंयुक्तं सर्वैः सुलक्षणैः उपेतम्, सर्वाभरणभूषितम् सर्वैराभरणैः अलङ्कृतम्— ॥१०८॥

दिव्याम्बरधरं दिव्यवस्त्रं धारयमाणम् देवं विद्योतमानम्, दिव्यगन्धानुलिप्ताङ्गं दिव्यैर्गन्धैः अनुपलिप्तसर्वावयवम् दिव्यमालाविभूषितं दिव्यस्रगलङ्कृतम् इत्थंभूतं सदाशिवस्य दिव्यरूपं लोकोत्तरस्वरूपं उदाहृतं अभिहितम् —॥१०९॥

---

(1) संयुतम्— ञ.

(2) दिव्यगन्धेत्यारभ्य—[illegible] हसिताननं इत्यन्तं— क. घ. छ. ट. ढ. ड ढ. त. थ. द. व पुस्तकेषु न दृश्यते ।

[1]शांतरूपमिदं वत्स ! किञ्चित्प्रहसिताननम् ।
एतद्रूपं स्मरेन्नित्यं धर्मकामार्थमोक्षदम् ॥ ११० ॥

[ सदाशिवस्य पञ्चमुखत्वम् ]

ध्यानरूपमिदं [2] प्रोक्तं [3] विशेषस्त्वधुनोच्यते ।
[4]कर्मेशः[5] पूर्ववक्त्रं स्यात् कर्तृ स्यात्
दक्षिणाननम्[6] ॥ १११ ॥

---

हे वत्स! हे कुमार! किञ्चित्प्रहसिताननं ईषत्प्रहसितवदनम्, इदं स्वरूपम्, शांतरूपं शांताकारं भवति। धर्मकामार्थमोक्षदं धर्मादिचतुर्विध-पुरुषार्थदायकम्, एतद्रूपं सदाशिवस्य दिव्यरूपमिदं नित्यं अनवरतं स्मरेत् ध्यायेत् ॥११०॥

इदं एतत ध्यानरूपं ध्यानार्हं स्वरूपं इति प्रोक्तं अभिहितम्, विशेषस्तु एतध्यानार्हरूपस्य विशेषस्तु अधुना इदानीं उच्यते अभिधीयते। कर्मेशः कर्मसादाख्यरूपम् पूर्ववक्त्रं स्यात् पूर्वमुखं भवति। कर्तृ कर्तृसादाख्यं रूपं दक्षिणाननं स्यात् दक्षिणामुखं भवति ॥१११॥

---

(1) इदं पद्यार्धं– क. पुस्तके न दृश्यते ।
(2) मिति– ट.
(3) ध्यानलक्षणमेवोक्तं– ड प
(4) कर्मेशः– इत्यारभ्य 'कर्मान्तवक्त्रवेत्' इत्यन्तो भागः 'घ' पुस्तके न दृश्यते ।
(5) कर्मेशं ख ग. च. झ. ट. ञ. ड. ढ त थ. द. ध. प फ.
(6) पूर्वरूपं तु कर्तृ सव्याननं भवेत् । ख. ग. च. झ पुर्ववक्त्रं स्यात् कर्तारं दक्षिणाननम् – फ.

अपरं मूर्तवक्त्रं[1] स्यात्[2] अमूर्तं चोत्तराननम् ।
ऊर्ध्वं तु शिवसादाख्यं एवं पञ्चाननं विदुः ॥ ११२ ॥

[ मुखानां दिग्व्यवस्था, ध्यानविधिश्च ]

कर्मेशानादि मूर्तान्तं[3] तथा कर्माख्यमुच्यते[4] ।
प्राग्वक्त्रं पूर्वमुद्दिष्टं पश्चिमं पश्चिमाननम्[5] ॥ ११३ ॥

---

मूर्तवक्त्रं मूर्तसादाख्यमुखम्, अपरं स्यात् पश्चिमाननं भवति । अमूर्तं च अमूर्तसादाख्यं उत्तराननं स्यात् उत्तरमुखं भवति। शिवसादाख्यं तु ऊर्ध्वं स्यात ऊर्ध्वमुख भवति । एवं इत्थं ध्यातारः सदाशिवं पञ्चाननं विदुः पञ्चमुखं जानन्ति ॥११२॥

तथा तथैव कर्मेशानादिमूर्तान्तं कर्मेशतत्त्वं कर्तृतत्त्वं मूर्ततत्त्वं चेति तत्त्वत्रयम् कर्माख्यं कर्मनामकं उच्यते कथ्यते । प्राग्वक्त्रं पूर्वमुद्दिष्टं पूर्वाभिमुख भवति, पश्चिमाननं पश्चिममुखं पश्चिममुद्दिष्टं पश्चिमाभिमुखं भवति ॥११३॥

---

(1) मूर्ति- क. ग. घ. ङ.
(2) अपरं मूर्तिवक्त्रम् तु- क. घ ढ. द ध.
पश्चिमं मूर्तिसादाख्यं - ख ग. घ. ङ.
(3) कर्मेशादि मूर्ध्यन्तं- क.
(4) ईशानादीनि मूर्धादि तथा कर्मान्तवक्त्रचेत्- ख ग. घ. ङ.
(5) पश्चिमायां तु पश्चिमम्- फ.

दक्षिणाभिमुखं याम्यं उत्तरं चोत्तराननम् ।
[1]ऊर्ध्वं तु दक्षिणं सव्यं[2] इतरं पूर्वपश्चिमम् ॥ ११४ ॥

किंचिदस्मिन्[3] विशेषोऽस्ति चोर्ध्ववक्त्रे तु[4] षण्मुख ।
मूलसञ्चित[5]तद्वक्त्रं परं मुखमिति स्मृतम् ॥ ११५ ॥

---

याम्यं यमदिङ्मुखम् दक्षिणाभिमुखं भवति । उत्तराननं च उत्तरमुखं च उत्तरं उत्तरादिगभिमुखं भवति । ऊर्ध्वे तु ऊर्ध्वमुखे तु दक्षिणं दक्षिणमुखम्, इतरं सव्यं तदितरं उत्तरमुखम् , पूर्वपश्चिमं पूर्वमुखं पश्चिममुखं च मिलित्वा वर्तन्ते। इदं ऊर्ध्वमुखं ऊर्ध्वदिगभिमुखं व्योमव्यापि तेजोमयं च भवते । अयमेवास्मिन् ऊर्ध्वमुखे विशेषः ॥११४॥

हे षण्मुख हे षडानन ! एतेषु पञ्चसु मुखेषु अस्मिंश्चोर्ध्ववक्त्रे तु अस्मिन् ऊर्ध्वमुखे तु किञ्चिद्विशेषोऽस्ति कश्चन विशेषो वर्तते । मूलसञ्चिततद्वक्त्रं मूलमन्त्रसहितं ऊर्ध्वमुखम् परं मुखमिति उत्कृष्टं वक्त्रमिति स्मृतं ज्ञात भवति ॥११५॥

---

(1) इदमर्धं- क. घ छ. ट, ठ ड. ढ. त. थ. द. ध. प. ब. पुस्तकेषु न न दृश्यते ।

(2) पश्चिमोत्तरम्- ख. ग च. झ.

(3) भेदे चास्मिन्- क. ख (पा) ट ठ ढ द.
भेदे तस्मिन्- प.

(4) चोर्ध्ववक्त्रस्य- ख. ग. च. झ.
चोर्ध्वाननस्य- प.

(5) मूलं सञ्चिन्त्य- ख ग च. झ.
सञ्चिंत- घ

पूजाकर्मी तु[1] सद्ध्यात्वा[2] चार्चयेत् कर्तृ[3]वक्त्रवत् ।
एवं सङ्कल्प्य विधिवत् पूजांते पूर्ववद्भवेत् ॥११६॥

[ सदाशिवस्वरूपनिरूपणनिगमनम् ]

तस्मात् नादात्मतत्त्वं[4] च[5] सर्वकारणकारणम् ।
सदाशिव[6] इति प्रोक्तं इति शास्त्रेषु निश्चितम् ॥११७॥

---

पूजाकर्मी तु ऊर्ध्वमुखस्य पूजां चिकीर्षुस्तु तत् ऊर्ध्वमुखं ध्यात्वा पूजाकाले निध्याय, कर्तृवक्त्रवत् कर्तृसादाख्यमुखमिव अर्चयेत् पूजयेत । एवं उक्तरीत्या विधिवत् आगमोक्तप्रकारेण सङ्कल्प्य सङ्कल्पं कृत्वा पूजान्ते पूजाऽवसाने पूर्ववत् भवेत् पूर्वमिव यथाध्यानं भवेत् ॥११६॥

तस्मात् पूर्वोक्तकारणात् नादात्मतत्त्वं च प्रसादमन्त्रस्वरूपशिवतत्त्वं च सर्वकारणकारणं सर्वेषां कारणानामपि कारणं मूलकारणमित्यर्थः । सदाशिव इति सदाशिवतत्त्वमिति प्रोक्तं निरूपितं भवति। इति एवं निष्कलब्रह्मेति प्रतीतं शिवतत्त्वमेव सकलनिष्कलात्मकसदाशिवतत्त्वात्मना सञ्जातमिति शास्त्रेषु शैवागमेषु निश्चितं विनिश्चितं वर्तते ॥११७॥

---

(1) काले तु– ख ग. च. झ.
कर्मणि– भ.
(2) तं ध्यात्वा– प. फ.
(3) कर्म– ख ग. च. झ.
(4) कत्वं– द ध. प. ब.
(5) एतत्पञ्चात्मकत्वात्तु– ख. ग. च झि.
(6) सदाशिवं– क. ख ग घ. च. छ. ज. ट. ठ. ढ ड त. थ

(कर्मस्वरूपम्).

एतद्वै कर्मरूपं तु कर्मवर्मेति[1] कारयेत् ।
कर्षणादिक्रियादीनि कर्मचेति[2] निगद्यते ॥११८॥

(पञ्चसादाख्येषु कर्मसादाख्यस्यैव[3] स्थापनविहिता)

तस्माद्वै स्थापनादीनि कर्ममूर्तौ तु कारयेत् ।
लिङ्गे वा स्थण्डिले वाऽपि[3] कुम्भे वा[4] हृदयेपि वा ॥११९॥

---

कर्मरूपं तु एतावत्पर्यन्तं निरूपितं कर्मस्वरूपं तु एतद्वै पूर्वोक्तसादाख्यतत्त्वमेव तस्मात् भक्तानां कर्म कर्मस्वरूपं वर्मेति वज्रकवचमिति मत्वा विहितं तत्कर्म कारयेत् कुर्यादिति यावत् । कर्षणादिक्रियादीनि आवाहनादि क्रियाजातं कर्म चेति कर्मनाम्ना निगद्यते अभिधीयते ॥

तस्माद्वै तस्मात कारणादेव स्थापनादीति स्थापनादिक्रियाजातं कर्ममूर्तौ तु कर्मसादाख्यस्वरूपे तु कारयेत् कुर्यादिति यावत् । लिङ्गे वा शिवलिङ्गे वा स्थंडिले वाऽपि परिष्कृतपवित्रप्रदेशे वाऽपि कुम्भे वा कलशे वा हृदयेऽपि वा हृदयकमलेपि वा- ॥ ११९. ॥

---

(1) एतद्वै कर्मरूपत्वात् कर्म कर्मणि- ख. ग. च. झ.
(2) एतद्वै कर्मरूपं तु कर्म कर्मेति- भ. फ.
(3) वह्नौ- ख. ग. च. झ.
(4) मण्डले- क. घ. ट. ठ. ड. ढ. व. थ.
 मण्डपे- ध

ध्यात्वा सदाशिवं पूज्य विधिवत् स्थापयेत् ततः[1] ।
कर्त्रादिकचतुर्णां तु[2] स्थापनं च न कारयेत् ॥१२०॥

[आवाहनादिस्वरूपविवरणेन कर्मसादाख्योपसंहारः]

[3]आवाहनं स्वात्मनि चित्प्रकाशः[4]
तत्रास्थितिस्थापनमीश्वरस्य ।
सान्निध्यमात्मेश्वर[5]सन्निधानं
संरोधनं स्वस्य शिवे निरोधः ॥१२१॥

---

सदाशिवं सदाशिवस्वरूपं ध्यात्वा निध्याय पूज्य पूजयित्वा ततः पश्चात् विधिवत् आगमोक्तरीत्या स्थापयेत् स्थापनं कुर्यात् । कर्त्रादिकचतुर्णां तु कर्तृसादाख्यादिचतुर्विधसादाख्यानां स्थापनं च नकारयेत् न कुर्यात् ॥

अथ आवाहन-स्थापन-सन्निधान-सन्निरोधानां स्वरूपं निरूप्यते-आवाहनमित्यादिना । स्वात्मनि शिवध्यानपरस्य शिवभक्तस्य चित्ते चित्प्रकाशः ज्ञानस्वरूपशिवतत्त्वाकर्षणं आवाहनं भवति । तत्र हृदयकमले ईश्वरस्य सदाशिवस्य स्थितिः स्थिरीकरणं स्थापनं भवति । आत्मेश्वरसन्निधानं जीवेश्वरयोः सान्निध्यं सन्निधानं भवति । शिवे परमेश्वरे स्वस्य आत्मनः संरोधनं सम्यक् बन्धनं निरोधः भवति ॥१२१॥

---

(1) स्थापयेत् सदा- त
स्थापनं कुरु- फ.
(2) च- ध. फ.
(3) इदं पद्यं- ध- फ. पुस्तकयोः न दृश्यते ।
(4) चित्प्रकाशं- ख. ग च. झ.
(5) मात्रेश्वर- ख. ग. च. झ.

योगिनां मन्त्रिणां चैव स्तुतिमात्रं भवेत् गुह!।
इत्येतैः लक्षणैर्युक्तं कर्मसादाख्यमुच्यते[1] ॥१२२॥

(पञ्चसादाख्यनिरूपणनिगमनम्)

[2]शिवादिकर्मपर्यन्तं क्रमेणैव प्रकीर्तितम्[3]।
सादाख्यलक्षणं प्रोक्तं महेशं [4]शृणु षण्मुख! ॥१२३॥

---

हे गुह हे स्कन्द ! **योगिनां** शिवयोगिनां **मन्त्रिणां चैव** मन्त्रज्ञानां चैव **स्तुतिमात्रं भवेत्** स्तोत्रमात्रं ईश्वरप्रीत्यै पर्याप्तं भवति । इति **एतैः लक्षणैः** पूर्वोक्तैः चिह्नैः **युक्तं** सहितं स्वरूपं **कर्मसादाख्यं** कर्मसादाख्यनाम्ना **उच्यते** अभिधीयते ॥

**शिवादिकर्मपर्यन्तं** शिवसादाख्यमारभ्य कर्मसादाख्यपर्यन्तं पञ्चसादाख्यतत्त्वं **क्रमेणैव** क्रमशः एवं **प्रकीर्तितं** प्रकर्षेण निरूपितम् । इत्थं **सादाख्यलक्षणं** सादाख्यरूपं **प्रोक्तं** अभिहितम् । सृष्टिस्थितिलयात्मकस्वतन्त्रं चक्रं भ्रामयन् सदाशिवः महेशः सन् लीलाधरो भवतीत्याह—**महेशमित्यादिना** । हे **षण्मुख** ! हे सुब्रह्मण्य ! इतः परं **महेशं** महेशतत्त्वं **शृणु** अवधारय ॥ १२३ ॥

---

(1) ख्यलिङ्गकम्– ख. ग. च झ.

(2) इतः प्राक्– ततो नाहो न रात्रिश्च न विष्णुः न प्रजापतिः आकाशादीनि भूतानि किं पुनर्भौतिकं जगत्" इत्ययं श्लोकः दृश्यते– क.

(3) क्रमेण परिकीर्तितम्– फ.

(4) माहेशं– ठ.

(महेशतत्वस्वरूपम्)

कर्मेशस्य सहस्रांशात् महेशस्य समुद्भवः।
महेशं सकलं विद्यात्[1] सृष्टिस्थितिलयावहम्[2] ॥१२४॥

पञ्चविंशतिभेदैस्तु तन्मूर्तिर्विविधा भवेत्[3]।
नानारूपधरं देवं नानारूपसमन्वितम्[4] ॥१२५।

---

कर्मेशस्य कर्मसादाख्यस्य दिव्यलिङ्गस्य सहस्रांशात् सहस्रभागे ष्वेकभागात् महेशस्य महेशतत्त्वस्य समुद्भवः उत्पत्तिः भवति सृष्टिस्थिति-लयावहं सृष्टिस्थितिलयकर्तारं महेशं महेशतत्त्वं सकलं कलासहितं विद्यात् विजानीयात् ॥ १२४ ॥

तन्मूर्तिः पूर्वोक्तमहेशमूर्तिः पञ्चविंशतिभेदैस्तु पञ्चविंशतिसंख्या-कैः भेदैः विविधा भवेत्, पञ्चविंशतिप्रकारा भवतीति यावत्, नाना-रूपधरं सोमधराद्यनेकविधरूपभेदान् धारयमाणं देवं प्रकाशमानं नानारूपसमन्वितं नानास्वरूपयुतम् ॥ १२५ ॥

---

(1) विन्द्यात्- ट, ठ. ड. ढ. त. थ.
(2) लयात्मकम्- ख. ग. घ. ङ.
(3) तन्मूर्तौ पञ्चविंशतिः- क. ख. (पा) ग. छ.
मूर्तयः पञ्चविंशतिः- ध
नानाभेद- फ.

नानाचिह्न[1]समोपेतं नानालीलाधरं हरम्[2] ।
स्थ नयानसमासीनं[3]नृत्यकोपमसौम्यकम्[4] ॥१२६॥

अनेकाकारसंयुक्तं देवदेवं महेश्वरम् ।
जटामकुटसंयुक्तं एकवक्त्रं त्रिणेत्रकम् ॥१२७॥

---

नानाचिह्नसमोपेतं अनेकलांछनसहितं, नानालीलाधरं बहुविध-लीलासमन्वितं, हरं समस्तजगत्संहारकर्तृ स्थानयानसमासीनं अनेक-स्थानेषु अनेकवाहनेषु च समलंकृतं नृत्यकोपमसौम्यकं नृत्यकाली-नसौन्दर्यसमानसौन्दर्यविशिष्टम् ॥ १२६ ॥

अनेकाकारसंयुक्तं बहुविधैराकारैर्युतम् देवदेवं इन्द्रादीनामपि देवानां प्रभुम् महेश्वरं महेश्वरतत्त्वात्मना प्रख्यातं जटामकुट संयुक्तं जटाकलितकिरीटसमलंकृतम् , एकवक्त्रं एकवदनम् त्रिणेत्रकं त्रिणयनम् ॥ १२६ ॥

---

(1) लिङ्ग- फ

(2) लीलामनोहरम्- फ.

(3) यानं- ख ग. च झ.

(4) नृत्त कोपं च सास्यकम्- ख ग. च. झ.

नृत्तकोपमसौम्यकम्- ध. प. ब.

चतुर्भुजसमायुक्त एकपद्मासनस्थितम् ।
वरदाभयहस्तं च मृगीपरशुधारकम् ॥१२८॥

[महेशतत्त्वस्य लीलामूर्तिभेदाः पञ्चविंशतिः]

सर्वाभरणसंयुक्तं सर्वलक्षणसंयुतम्[2] ।
महेशरूपमित्युक्त रूपभेदस्त्वथोच्यते ॥ १२९ ॥

---

चतुर्भुजसमायुक्तं चतुर्भिः भुजैरुपेतं एकपद्मासनस्थितं प्रधान-भूतपद्मासनोपविष्टम् वरदाभयहस्तं च वरदाभयाख्यमुद्रायुतहस्तद्वयोपेतं मृगीपरशुधारकं हस्तद्वये क्रमशः हरिणीं परश्वायुधं च धारयमाणम् ॥१२८॥

सर्वाभरणसंयुक्तं सर्वैः आभरणैः उपेतम् सर्वलक्षणसंयुक्तं सर्वावयवसुन्दरम् इति एवं महेशरूपं महेशतत्त्वस्वरूपं उक्त अभिहितं भवति । अथ महेशतत्त्वस्वरूपनिरूपणानन्तरं रूपभेदस्तु पञ्चविंशात-लीलामूर्तिभेदस्तु उच्यते अभिधीयते ॥ १२९ ॥

---

(1) इदं पद्यं– क. घ. छ ट ठ. ड. ढ त. थ. द प. ब. पुस्तकेषु न दृश्यते ।

(2) मेवोक्तं- ख. ग. च झ.

(3) रूपभेदं त्वथोच्यते- ख ग. च झ.
रूपभेदमिहोच्यते- ट ढ. थ द.
रूपभेदमथ शृणु-फ
एकपद्मासनस्थितम्- क

प्रथमं सोमधारी स्यात्[1] द्वितीयमुमया सह ।
तृतीयं तु वृषारूढः[2] चतुर्थं नृत्यकोपमम्[3] ॥१२०॥

---

महेशः सोमधारी स्यात् रोहिणीनिमित्तं दक्षशापं परिहृत्य चन्द्रधरो भवतीति यत् तत् प्रथमं प्रथमलीलारूपम् । महेशस्य शिरः चन्द्रस्योत्पत्तिस्थितिलयस्थानम् । अयं च चन्द्रः स्वस्यामृतस्वरूपतया समस्तजीवराशेरपि जीवनाधारो भवति । अतः आदौ महेशस्य सोमधारणलीलारूपम् ।

२) महेशः उमया सह उमया सहितो भवतीति यत् तत् द्वितीयं द्वितीयलीलारूपं भवति । जगत्सृष्ट्यर्थं महेशः उमया सहितो भवति ।

३) महेशः वृषारूढः वृषभमारूढवान् इति यत् तत् तृतीयं तु तृतीय लीलारूप भवति । जगत्संहारसमये धर्मः सर्वसंहारं दृष्ट्वा स्वस्यापि नाशो भवेदिति भीत्या वृषभरूपेण महेशं शरणं गतः, तदा महेशः तं स्ववाहन कृत्वा अन्वगृह्णात इति ।

४) नृत्यकोपमं कल्पावसाने सर्वं संहृत्य महेशः यत् नृत्यं कृतवान् तस्य ब्रह्मादीनामपि गोचरीकरणाय पुनः तत्सदृशमेव नृत्यं कृतवानिति यत् तत चतुर्थं लीलारूपं भवति ॥ १२० ॥

---

(1) धारी च- ट. ठ ढ. त. थ द ध ब
(2) रूढं - ट ठ ड. ढ. ब. थ द ध प फ. ब
(3) नृत्तरूपकम् - ख ग. घ. झ.
नृत्यकोपमम् - ध फ ब

त्रयोदशं[1] हरिध्वंसी[2] त्वर्धनारी[3] चतुर्दशम् ।
किरातः स्यात् पञ्चदश[4] कङ्काली[5] षोडशं[6] भवेत् ॥१२३॥

---

१३)महेशः हरिध्वंसी हरेरवतारान् संहृतवानिति यत् तत् त्रयोदशं लीलारूपं भवति । महेशः महाविष्णोः मत्स्यकूर्माद्यवतारान् संहृतवानिति ॥

१४) महेशः अर्धनारी तु अर्धनारीश्वरो बभूवेति यत तत् चतुर्दशं लीला-रूपं भवति । महेशः प्रीत्या स्वशरीरार्धं उमादेव्यै ददाविति ॥

१५) महेशः किरातः शबरवेषधारी बभूवेति यत् तत् पञ्चदशं लीला-रूपं स्यात् । स्वभक्तं अर्जुनं अनुगृहीतुं किरातो बभूवेति ।

१६)महेशः कङ्काली कङ्कालास्थि हस्ते धृतवानिति यत् तत् षोडशं लीलारूपं भवेत् । महेशः त्रिविक्रमं विजित्य तस्य कङ्कालं स्वहस्ते धृतवा-निति ॥१२३॥

---

(1) त्र्योदशो- ख. ग. च. झ

(2) हरेरर्धं- ख. ग च. झ.

हरिहरार्धं- क.

(3) त्वर्धनारिः- ख ग. च झ.

(4) पञ्चदश- ख. ग. च. झ.

(5) कङ्कालः- ख. ग. च. झ.

(6) षोडशो- ख ग. च झ

चण्डेशानुग्रहश्चैव तथा सप्तदशं भवेत्[1] ।
विषपहरणं चैव[2] तदष्टदशमिति स्मृतम्[3] ॥ १३४ ॥
चक्रदानस्वरूपं च[4] एकोनविंशतिस्मृतम्[5] ।
विघ्नप्रसादो विंशः स्यात्[6] सोमास्कन्दस्ततः परम्[7] ॥ १३५ ॥

---

महेशेन तथा चण्डेशानुग्रहश्चैव कृतः इति यत् तत् सप्तदशं लीलारूपं भवेत् । महेशः पापिष्ठमपि चण्डेशनामकं विप्रं अनन्यगतिकं अनुगृह्य तस्मै गणेश्वरपदवीं ददाविति ।

१८) महेशेन विषापहरणं चैव विषपानं कृतमिति यत् तत् अष्टादशं तु लीलारूपमिति स्मृतम् । महेशः अमृतमथनकाले समुद्रस्य लोकदाहकस्य हालाहलस्य पानं कृत्वा नीलकण्ठो बभूवेति ॥१३४॥

१९) महेशस्य चक्रदानस्वरूपं च चक्रायुधप्रदानस्वरूपं च एकोनविंशतेः एकोनविंशतीरूपमिति, हि स्मृतम् । महेशः जलन्धरार्थं सृष्टं चक्रं स्वपूजां कुर्वते विष्णवे ददाविति ।

२०) महेशस्य विघ्नप्रसादः विघ्नेश्वरप्रसादाय कृतलीलाविग्रहः विंशः विंशतितमः स्यात् । ततः परं महेशः सोमास्कंदः उमया स्कंदेन च सहितो बभूव ॥१३५॥

---

(1) चण्डेशानुग्रहस्सप्तदशेति परिकीर्तितः- ख. ग. च. झ.
चण्डेशानुग्रहं चैव ततः सप्तदशं भवेत्- प.
(2) विषसंहारिणं चैव - क.
(3) विषापहरणश्चाष्टादशेति समुदाहृतः- ख. ग. च. झ.
(4) तु- क. ख. घ. छ. ट. ठ. ड. ढ. त. थ. प.
(5) एकोनविंशतिश्चैव चक्रादानस्वरूपकम्- फ.
(6) विंशतिविघ्नप्रसादः- ख. ग. च. छ.
(7) उमास्कन्दस्ततः परम्- फ.

सोमास्कन्दश्चैकविंशः[1] द्वाविंशश्चैकपादकः[2] ।
सुखावहस्त्रयोविंशः[3] भवेच्च[5] तदनन्तरम् ॥१३६॥
दक्षिणमूर्तिरूपं तु[6] चतुर्विंशमितीरितम्[7] ।
लिङ्गोद्भवस्वरूपं तु[8] पञ्चविंशं प्रकीर्तितम् ॥१३७॥

---

२१) सोमास्कन्दः महेशस्यायं सोमास्कन्दलीलाविग्रहः एकविंशः एकविंशतितमो भवति । महेशः उमया स्कन्देन च सहितः सन् अन्धकासुरं निगृहीतवानिति ।

२२) महेशः एकपादकः एकपादचारी बभूवेत्ययं लीलाविग्रहः द्वाविंशः द्वाविंशतितमः । कस्मिंश्चित् कल्पान्तरे महेशः स्थावरजङ्गमात्मकं जगत् संहृत्य लीलया एकेनैव पादेन चचारेति ।

२३) तदनन्तरं महेशः सुखावहः सर्वाभरणभूषितः सर्वावयवसुन्दरः दिव्यमङ्गलविग्रहश्च सन् जगतां सुखदायको जातः इति अयं लीलाविग्रहः त्रयोविंशः त्रयोविंशतितमः बभूव ॥ १३६ ॥

२४) महेशस्य दक्षिणमूर्तिरूपं तु दक्षिणामूर्तिलीलारूपं तु चतुर्विंशमिति चतुर्विंशतितममिति ईरितं अभिहितम् । वीतरागो महेशः वटवृक्षमूलं समाश्रित्य दक्षिणाभिमुखमुपविश्य तत्त्वमुपदिदेशेति ।

२५) लिङ्गोद्भवस्वरूपं तु महेशस्य लिङ्गोद्भवलीलारूपं तु पञ्चविंशं पञ्चविंशतितमं प्रकीर्तितम् । महेशः लोकोपकाराय ध्यानपूजास्पद-ज्योतिर्लिङ्गात्मना आविर्बभूवेति ॥१३७॥

---

(1) उमास्कन्दैकविंशतिः - ख- (प)।
(2) जाह्नवीधरमूर्तिः स्यात् द्वाविंशत् परिकीर्तिता- प.
(3) त्रयोविंशत् सुखासनम्- प.
(4) अयं पादः- छ ट. ड ठ ढ. ण. थ. द पुस्तकेषु न दृश्यते ।
(5) स्याद्भवेत्- क
(6) दक्षिणेशं ततः परम्- ड.
(7) अयं पादः ड पुस्तके न दृश्यते ।
(8) उक्तलिङ्गोद्भवं चैव- ज.

[आसां लीलामूर्तीनां कर्मसादाख्यादाविर्भूतत्वम्]

**एते महेशरूपाश्च[1] मूर्तिभेदाः प्रकीर्तिताः ।**
**सोमधार्यादिलिङ्गान्तं[2] कर्मणश्च समुद्भवम्[3] ॥१३८॥**

**एते महेशरूपाश्च[4] कर्माख्याश्च समुद्भवाः ।**
**[5]पञ्चविंशतिभेदेन[6] रूपभेदाः प्रकीर्तिताः[7] ॥१३९॥**

---

**एते** इमे पूर्वोक्ताः पञ्चविंशतिप्रकाराः **महेशरूपाश्च** महेशात्मकाश्च **मूर्तिभेदाः** लीलाविग्रहभेदाः **प्रकीर्तिताः** एतावता एवं निरूपिताः । **सोमधार्यादिलिङ्गान्तं** सोमधारिरूपमारभ्य ज्योतिर्लिङ्गान्तं सर्वं रूपं **कर्मणश्च** कर्मसादाख्यात् **समुद्भवं** समुद्भूतमित्यर्थः ॥१३८॥

**कर्माख्याच्च** कर्मसादाख्याच्च **समुद्भवाः** सञ्जाताः **एते** सोमधार्यादय **महेशरूपाश्च** महेशतत्त्वस्वरूपाः भवन्ति । एवं महेशतत्त्वस्य **रूपभेदाः** सोमधार्यादिज्योतिर्लिङ्गान्ताः स्वरूपभेदाः **पञ्चविंशतिभेदेन** पञ्चविंशतिप्रकारेण **प्रकीर्तिताः** पृथक् पृथक् अभिहिताः ॥ १३९ ॥

---

(1) एवं महेशरूपाणि-ध, एते महेशरूपाणि-फ, एते महेशरूपाः स्युः-क. घ. छ, एते महेशरूपास्तु- ढ. ब द.

(2) सोमधारादिलिङ्गान्तं- ख. ग च. झ, इन्दुधरादि स्थाण्वन्तं- ख. ग (पा) ट. घ छ त थ. द प, इन्दुधारादिस्थाण्वन्तं- ठ. ड, स्थाण्वन्तमिन्दुधार्यादि- ध

(3) समुद्भवः- ख. ग. च. झ.

(4) कर्माख्यादि- ख ग. च झ. कर्मास्थिष्- फ

(5) पञ्चविंशत्प्रकारेण- ख. ग. च. झ.

(6) इतआरभ्य 'गणेशस्तु गलोद्भवः' इत्यन्तो भागः घ पुस्तके न दृश्यते

(7) रूपं प्रति पृथक् रवः ग. च झ

[ महेशात् त्रिमूर्तीनां सर्व(जगतां)तत्त्वानां च सृष्टिः ]

[1]महेशस्य सहस्रांशात् रुद्रदेवसमुद्भवः ।
तन्महेश्वरकोट्यंशात् विष्णुदेवसमुद्भवः[2] ॥१४०॥

[3]विष्णुदेवस्य कोट्यंशात् ब्रह्मदेवसमुद्भवः ।
नेत्रे दक्षिणवामोर्ध्वे[4] सूर्यसोमाग्निसम्भवः[5] ॥१४१॥

---

**महेशस्य** एतन्महेशतत्त्वस्य **सहस्रांशात्** सहस्रभागेष्वेकस्मात् भागात् **रुद्रदेवसमुद्भवः** रुद्रदेवस्य समुत्पत्तिर्भवति । **तन्महेश्वरकोट्यंशात्** पूर्वोक्तमहेशस्य कोटिभागेषु एकभागात् **विष्णुदेवसमुद्भवः** विष्ण्वाख्यदेवस्य समुत्पत्तिर्भवति १४० ॥

**विष्णुदेवस्य कोट्यंशात्** कोटिभागेष्वेकभागात् **ब्रह्मदेवसमुद्भवः** देवस्य ब्रह्मणः समुत्पत्तिर्भवति । **दक्षिणावामोर्ध्वे नेत्रे** दक्षिणवामोर्ध्वभागस्थेषु नेत्रेषु क्रमेण **सोमसूर्याग्निसम्भवः** चन्द्रस्य सूर्यस्य अग्नेश्च उत्पत्तिर्भवति ॥१४१॥

---

(1) इदमर्धं- क. ख. घ. छ ट. ठ. ड ढ. त. थ. द. पुस्तकेषु न दृश्यते

(2) समुद्भवम्- घ.
ब्रह्मविष्णुसमुद्भवौ- क. ख. छ ट. ठ. ड. ढ. त. थ. द.

(3) इदमर्धं- क. घ. छ ट. ठ. पुस्तकेषु न दृश्यते ।

(4) नेत्रेषु सव्यवामोर्ध्वे- ख. ग. ण. ञ.

त्रिकोणमुमया सार्धं सोमसूर्याग्निलोचनम्- क ख घ. छ. ट ठे. ड. ढ. त. थ. द

घ्राणे वायुः समुत्पन्नः [1]श्रोत्रे कीलादिसम्भवः[2] ।
आस्ये ज्ञानं समुत्पन्नं गणेशस्तु गलोद्भवः ॥१४२॥

षण्मुखो हृदये जातः नाभेः देवादिसम्भवः[3] ।
पञ्चाशत्कोटिदेवाश्च महेशस्वेदसम्भवाः ॥१४३॥

---

घ्राणे नासिकायां, वायुः अनिलः, समुत्पन्नः जातः । श्रोत्रे कर्णे कीलादिसंभवः कीलादीनां उत्पत्तिर्भवति । आस्ये मुखे ज्ञानं समुत्पन्नं समुद्भूतम् गणेशस्तु गणपतिस्तु गलोद्भवः कण्ठादुत्पन्नो भवति ॥१४२॥

षण्मुखः षडाननः हृदये हृदि जातः उत्पन्नः । नाभेः नाभिप्रदेशात देवादिसंभवः इन्द्रादिदेवानां समुत्पत्तिः भवति । पञ्चाशत्कोटि देवाश्च पञ्चाशत्कोटिसंख्याकाः देवाश्च महेशस्वेदसम्भवाः महेशस्य स्वेदात आविर्भूताः ॥ १४३ ॥

---

(1) श्रोत्रे इत्यारभ्य 'ज्ञानं समुत्पन्नं' इत्यन्तं क. ख. ग. छ. ट. ठ. ड. ढ त. थ. द. पुस्तकेषु न दृश्यते ।

(2) श्रोत्रे चैव दिगीश्वरः- फ.

(3) नाभौ देवाश्च सम्भवाः फ.

ऋषयश्च तथा कोट्यः रोम्णि चैव समुद्भवाः ।

[पञ्चविधशक्तिप्रपञ्चनिरूपणम्]

तत्त्वानामुद्भवः प्रोक्तः शक्तीनां उद्भवं शृणु ॥१४४॥

बिन्दुरूपदशांशेन चोमाशक्तेः समुद्भवः[1] ।
उमांबिका गणानी च[2] त्वीश्वरी च मनोन्मनी[3] ॥१४५॥

---

तथा कोट्यः ऋषयश्च एवमेव अनेककोटिकोटिसंख्याकाः ऋषयश्च रोम्णि चैव महेशस्य देहस्थरोमभ्यः समुद्भवाः सञ्जाताः। एतावता तत्त्वानां शिवतत्त्वानां उद्भवः उत्पत्तिक्रमः प्रोक्तः अभिहितः । इदानीं शक्तीनां उमादिशक्तीना उद्भवं उत्पत्तिं शृणु अवधारय ॥१४४॥

बिन्दुरूपदशांशेन बिन्दुरूपायाः पराशक्तेः दशमभागेन उमाशक्तेश्च उमाख्यशक्तेः समुद्भवः समुत्पत्तिः भवति । उमा, अम्बिका गणानी ईश्वरी मनोन्मनी चेति एकैकाऽपि शक्तिः—॥१४५॥

---

(1) शक्तिः समुद्भवा— ख. ग. च. झ.

शक्तिसमुद्भवः— छ. ट. ठ. ड. ढ. त. थ. द. ध. प.

(2) गणेशी च— ख. ग. च. झ.

(3) गणोन्मनी— ख.

[1]एकैकेन[2] दशांशेन जायते क्रमशस्तथा ।
एता वै शक्तयः पञ्च शिवादीनां तु[3] शक्तयः ॥१४६॥

[मनोन्मन्युद्भूतगौरीशक्तिप्रभावः]

[4]मनोन्मनीसहस्रांशात्[5] गौरी जातेति कीर्तिता ।
तस्याः[6] सरस्वती दुर्गा ह्युमायाश्च प्रभावतः ॥१४७॥

---

-तथा पराशक्तेरुमेव एकैकेन दशांशेन एकैकस्या अपि शक्तेः दशमभागेन क्रमशः क्रमेण जायते उत्पद्यते । तद्यथा उमायाः दशांशेन अम्बिका, अंबिकायाः दशांशेन गणानी, गणान्याः दशांशेन ईश्वरी, ईश्वर्याः दशांशेन मनोन्मनी इत्येवं उत्पत्तिक्रमः । एताः वै पूर्वोक्ताः पञ्चशक्तयः उमांबिकादिपञ्चशक्तयः शिवादीनां तु शक्तयः शिवसादाख्यादिपञ्चसादाख्यानां शक्तयः क्रमेण भवन्ति ॥१४६॥

मनोन्मनीसहस्रांशत् मनोन्मनीशक्तेः सहस्रभागेष्वेकभागात् गौरी गौर्याख्यशक्तिः जाता उत्पन्ना इति कीर्तिता कथिता भवति । उमायाश्च प्रभावतो हि उमाशक्तेः प्रभावादेव तस्याः गौर्याः सरस्वती दुर्गा– ॥ १४७ ॥

---

(1) इदमर्धं छ पुस्तके न लभ्यते ।
(2) एकैकं तु–फ.
(3) च– ख. ग घ. ङ.
(4) इदमर्धं छ पुस्तके न दृश्यते ।
(5) सहस्रांशे–फ.
(6) लक्ष्मीः–ख. ग. घ. ङ.
वश्या– क. घ. ट. थ. छ.
क्रिया–फ.

शची ज्येष्ठा च लक्ष्मीश्च[1] तथा चान्याश्च शक्तयः[2] ।
[3]कोटिशक्तय एता वै[4] गौरीदेहसमुद्भवाः ॥१४८॥
शक्तिभेदो विशेषेण[5] समासात् परिकीर्तितः[6] ।

[तत्त्वभेदनिरूपणोपसंहारेण पटलार्थनिगमनम्]

[7]शिवादयो महेशांताः ह्येकत्रिंशत् प्रकीर्तिताः ॥१४९॥

---

शची ज्येष्ठा च लक्ष्मीश्च तथा अन्याः शक्तयश्च चामुण्डी काल्यादयश्च जायन्ते। एता वै कोटिशक्तयः इत्येताः कोटिसंख्याकाः शक्तयः गौरीदेहसमुद्भवाः गौरीदेहात् समुद्भूताः भवन्ति ॥१४८॥

एवं समासात् संग्रहेण शक्तिभेदः उमादिशक्तीना भेदः विशेषेण तत्तद्रूपेण परिकीर्तितः अभिहितः। शिवादयो महेशान्ताः शिवतत्त्वमारभ्य महेशतत्त्वपर्यंतं एकत्रिंशत् एकत्रिंशत्संख्याकाः शिवतत्त्वभेदाः प्रकीर्तिताः प्रकर्षेण अभिहिताः। तद्यथा— शिवः (१) सदाशिवः, (पञ्च सादाख्यानि) (५) महेशः (लीलामूर्तयः) (२५) इत्याहृत्य एकत्रिंशत्तत्त्वभेदाः भवन्ति ॥ १४९ ॥

---

(1) ज्येष्ठा तथा शान्ता– ख. ग. च. ख.
(2) तदन्याश्चैव शक्तयः– भ.
(3) इदमर्धं छ पुस्तके न दृश्यते।
(4) एता वै कोटिशक्तिश्च– ट. ठ. ड. ढ. त. थ. द.
शक्तीनां कोट्यश्चैव–घ.
(5) शक्तिभेदं– घ. छ. प. फ.
(6) परिकीर्तितम्– घ. छ. प. फ.
छ पुस्तके अत्रैव पटलसमाप्तिः दृश्यते।
(7) इदं पद्यार्धं च. ट. ठ. ड. ढ. त. थ. द. ध. फ. पुस्तके न दृश्यते।

यो वेत्ति तत्त्वभेदं तु स पूजा स्थापनार्हकः ।
[1]एवं त्रिमूर्तिभेदस्तु समासात् परिकीर्तितः ॥ १५० ॥

तत्त्वभेदो मया प्रोक्तः वर्णभेदमथ शृणु[2] ।

इति श्रीवातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थसंहितायां तत्त्वभेदो नाम प्रथमः पटलः

---

यः पुरुषः तत्त्वभेदं इदं तत्त्वभेदस्वरूपं वेत्ति हि जानाति हि सः तत्त्वभेदज्ञः पूजास्थापनार्हकः शिवतत्त्वपूजायां शिवतत्त्व-स्थापने च योग्यः भवति । एवं उक्तप्रकारेण त्रिमूर्तिभेदस्तु शिव-सदाशिव-महेशरूप इति मूर्तित्रयभेदः समासात् संक्षेपेण परिकीर्तितः प्रोक्तः ॥ १५० ॥ हे षण्मुख ! एतावत्पर्यंतं एवं तत्त्वभेदः मया निरूपितः इतः परं वर्णभेदं शृणु अवधारय ॥

इति श्रीवातुलतन्त्रशुद्धाख्यसहस्रग्रन्थसंहिताव्याख्यायां

तत्त्वभेदो नाम प्रथमः पटलः समाप्तः



---

1) इदं पद्यार्धं- ट. ठ. ड. ढ. त. थ. द. पुस्तकेषु न दृश्यते ।
(2) तत्त्वभेदमिदं प्रोक्तं-ग. ट, ठ. ध. ब. तत्त्वभेदमयं प्रोक्तः-भ. इदं अर्धपद्यं क. घ. पुस्तकयोरेव दृश्यते

# द्वितीयः वर्णभेदपटलः

[ वर्णशरीरकहरस्तुतिरूपं मङ्गलम् ]

[1]समस्तबीज[2]प्रभवस्य[3] कारणं
नमामि देवं प्रणवान्तरस्थितम् ।
त्रिवर्ण[4] सम्भूतविवर्ण[5]वर्णगं
स्वशक्तिसंक्षोभकरं परं हरम् ॥ १ ॥

---

[ बिन्दुं संक्षोभ्य नादादीन् यस्तूत्पाद्य क्रमात् ततः।
लिङ्गवर्णाधिदेवत्वप्रयोजनविभेदतः ॥ १ ॥
व्योमादिबीजतः तत्त्वमूर्तिभावत्रिभेदतः ।
सुस्थिताखिलवर्णस्थः शिवायास्मै नमः सदा ॥ २ ॥

समस्तेत्यादि मङ्गलपद्ये- हरं नमामीति प्रथमं सम्बन्धः । नमामीत्युत्तमपुरुषप्रयोगात् अहमिति कर्तृलाभः । हरतीति हरः इति व्युत्पत्त्या स्वभक्तानां जननमरणोपलक्षितसमस्तसंसारक्लेशहरः इत्यर्थः । तं परमेश्वरं नमामि नमस्करोमि । हरं विशिनष्टि-समस्तेत्यादिना- समस्तबीजप्रभवस्य समस्तानि सर्वाणि यानि बीजानि अकारादिक्षकारान्त वर्णानि तेषां प्रभवस्य उत्पत्तेः कारणम् बिन्दुक्षोभणादिद्वारा हेतुभूतमित्यर्थः ।।

---

इदं पद्यं ख. ज फ. भ. पुस्तकेषु न दृश्यते ।
(2) बीजं- क ख. ग. घ. च छ ज. झ ट. ठ. त द.
(3) प्रभावस्य- क प.
(4) त्रिवर्न- ट.
(5) त्रिवर्ण ट.

देवं लोकोत्तरतेजोमयतया स्वतः प्रकाशमानम् । प्रणवान्तरस्थितं प्रणवो नाम अकारोकारमकाराणां समूहः ओमित्याकारकः तस्य अंतरे मध्ये स्थितं वर्तमानम्, प्रणवतनुमिति यावत् । त्रिवर्णसंभूतविवर्णवर्णगं बीजाक्षराणि तत्त्वमूर्तिप्रभावभेदेन त्रिवर्णात्मना सम्भूतानि वर्तमानानि तत्र तत्त्वबीजानि प्रकृतिस्वरवर्णानि, मूर्तिबीजानि विकृतिस्वरवर्णानि प्रभावबीजानि व्यञ्जनवर्णानि, एतानि त्रिवर्णानि विवर्णानि शुक्लादिविभिन्नवर्णयुक्तानि । अत्र वर्णपदं अधिदेवताप्रयोजनयोरप्युपलक्षकम् । तयोरप्यत्र पटले अभिधानात् । तथाच शुक्लादिविभिन्नवर्णैः पराशक्त्यादिविभिन्नदेवताभिः वशीकरणादिविभिन्नप्रयोजनैश्च विशिष्टेषु वर्णेषु अकारादिक्षकारान्तबीजाक्षरेषु गच्छति सञ्चरतीति वर्णगः तमित्यर्थः । तादृशवर्णशरीरकमिति यावत् ॥

त्रिवर्णसम्भूतेत्यत्र पुंस्त्रीनपुंसकभेदेनापि त्रिवर्णसम्भूततत्त्वं ग्राह्यम् । शिवः सृष्ट्यादौ स्वकीयनिष्कलपराशक्तिं संक्षोभ्य तन्मुखेन नादमुत्पाद्य तच्छरीरः सन् ज्ञानेच्छाक्रियाशक्तिद्वारा विभिन्नशुक्लादिवर्णैः पराशक्त्यादिविभिन्न देवताभिः सर्ववशीकरणादिविभिन्नप्रयोजनैश्चोपेतानि स्त्रीपुंनपुंसकात्मना तत्त्वमूर्तिप्रभावात्मना च त्रिभेदानि स्वरव्यञ्जनात्मकाकारादिक्षकारान्तवर्णान्युत्पाद्य तच्छरीरको वर्तते इति यावत् ॥ स्वशक्तिसंक्षोभकरं समस्तजगत्सृष्ट्यादौ शिवस्य निष्कलपराशक्तिरूपबिन्दोः संक्षोभणम् संक्षुब्धात् तस्मात् इच्छाशक्तेरुत्पत्तिः, ततः शब्दात्मकज्ञानशक्तिजननम्, ततश्च वाग्भवात्मक क्रियाशक्त्युद्भवः, ततश्च कलादिवर्णजननं इत्यादिसृष्टिप्रक्रियानुरोधेन सर्व कार्योत्पत्तिनिदानस्य बिन्द्वात्मकनिष्कलपराशक्तिक्षोभस्य प्रथमं आवश्यकत्वात् हरः सर्वसृष्ट्यादौ स्वशक्त्यात्मकं बिन्दुं क्षोभयतीति सञ्चालयतीति स्वशक्तिसंक्षोभकरः, तमित्यर्थः । बिन्दुसञ्चालकमिति यावत् । परं सर्वजगत्कारणत्वात् सर्वोत्कृष्टम् । ईदृशं हरं प्रणमामीत्यर्थः ॥ २ ॥

(पटलार्थः)

अथातः संप्रवक्ष्यामि वर्णभेदविधिं[1] परम्[2] ।
मन्त्राणामुद्भवं चैव[3] वर्णानां च समुद्भवम्[4] ॥२॥

(वर्णसंख्या-स्वरूप-रूपणम्)

अकारादिक्षकारान्तं[5] एकपञ्चाशदक्षरम्[6] ।
एते वर्णाः प्रशस्यन्ते[7] कामितार्थप्रदायकाः ॥३॥

---

अथ तत्त्वभेदनिरूपणानन्तरं अतः परं अस्योपरि उत्कृष्टभूतं वर्णभेदविधिं वर्णानां भेदविधिं मन्त्राणां समस्तमन्त्राणां उद्भवं चैव उत्पत्तिं च वर्णानां अक्षराणां समुद्भवं च सम्यगुत्पत्तिं च संप्रवक्ष्यामि सम्यक् वदामि ॥ २ ॥

अकारादिक्षकारांतं अकारः आदिः क्षकारः अंतः यस्मिन् तत् वर्णजातम् एकपञ्चाशदक्षरं एकपञ्चाशत्संख्याकाक्षरविशिष्टं भवति । एते वर्णाः इमे अष्टवर्गवर्णाः कामितार्थप्रदायकाः साधकैर्वांछितानामर्थानां प्रदायिनो भवन्तीति प्रशस्यन्ते कथ्यन्ते ॥ ३ ॥

---

(1) भेद विधिं क.
भेदविध-घ.
(2) क्रमम्-ङ. प.
(3) मुद्भवस्थं च- क. ग. च छ ट. ठ. ध.
मुद्भवं किञ्चित्-प.
(4) वर्णानि च समुद्भवम्-ङ. प.
वर्णानामुद्भवं भवेत्-ध.
वर्णानि च समुद्भवः-प. ङ
(5) क्षकारान्ताः-च. ज त. द.,ध.
(6) दक्षराः-क. ख. ग. घ. च. छ ज ट. ठ. ड. ढ़. फ. ब. भ.
(7) प्रदायकम्-ध द

स्त्रीरूपाश्चैव पुंरूपा:[1] तथा चो[2]भयरूपका:[3]।
सर्वे वै[4] देवतारूपा:[5] प्रत्येकं वर्णरूपधृत्[6] ॥४॥

(वर्णपर्यायनामानि)

वर्णं[7] बीजं तथार्णश्च[8] लिङ्गमक्षरमातृकम्[9] ।

---

एते वर्णाश्च स्त्रीरूपा: स्त्रीलिङ्गा: पुंरूपाश्चैव पुल्लिङ्गाश्च तथा चोभयरूपका: तथैव नपुंसकलिङ्गाश्च भवन्ति। एवं च वर्णा: स्त्री-पु नपुंसकरूपेण त्रिधा भिद्यन्ते। सर्वे वै वर्णा: देवतारूपा: देवतामया: भवन्ति। प्रत्येकं एकैकोऽपि वर्ण: पृथक् पृथक् वर्णरूपधृत् शुक्लादिवर्णस्वरूपं धारयति॥ ४ ॥

एतेषां वर्णानां पर्यायनामान्युच्यन्ते– वर्णमिति वर्णं बीजं तथा अर्णश्च लिङ्गं अक्षरमातृकम् अक्षरं मातृका च इत्येतानि वर्णानां

---

(1) स्त्रीरूप पुंसरूपं च प.
स्त्रीरूप पुरूप च-छ.

(2) स्थिताश्चो–छ

(3) रूपकम्–घ. ङ. छ. ञ, प.

(4) च– ज.

(5) रूपं–ङ. प फ.

(6) धृक्–ख. ग. च. क्ष.

(7) वर्ण:– क. ख.

(8) तथाकूटं–ङ. प.
तथार्णं च– ख ग. च क्ष.

(9) मातृका– क्ष ङ. फ.

एतानि षट्[1] च नामानि[2] वर्णपर्यायवाचकाः ॥५॥

[ वक्ष्यमाण- वर्णानुबन्धिविषयसंग्रहः ]

तेभ्यः[3] समुद्भवो[4] नाम रूपभेदः[5] तथांशकः[6] ।
तत्त्वमन्त्रादि[7]भेदश्चा[8]प्यधिदैव[9]फलं तथा[10] ।६॥

---

षट् च नामानि भवन्ति । इमे वर्णादिशब्दाः वर्णपर्यायवाचकाः वर्णानां पर्यायशब्दाः भवन्ति ॥ ५ ॥

तेभ्यः एकपञ्चाशदक्षरेभ्यः नामरूपभेदः नामरूपयोर्भेदः तत्त द्वर्णविभागः तथा अंशकः अंशरूपेण तत्त्वमन्त्रादिभेदश्च तद्वदेव अंशकत्वेन तत्त्वमन्त्रादीनां भेदश्च समुद्भवः संजातः । तथा अधि दैवफलं अधिदेवताफलं च समुद्भवं संजातम् ॥ ६ ॥

---

(1) एतेवै-ख. ग. च. ज, झ.
(2) सुनामानि-क.
च भेदानि-ठ. प.
(3) तेषां क. ख. झ.
एषां-घ.
(4) समुद्भवं- ख. ग. च. ज. झ.
(5) रूपभेदं-ख. ग. च. ज. झ.
रूपभेदं - ट.
(6) दाश्च कलं तथा-ढ.
तथांशकम्-ख. ग. च. ज. झ.
तथांशनम्-भ.
(7) तत्त्वमूर्त्यादि-घ.
(8) भेदं च- ख. ग. च. ज. झ.
(9) देवं - क. ध. प. फ.
(10) यथा-घ. ङ. ट. ठ

स्थूलसूक्ष्माकृतिं चैव[1] जीवोपाधिविभेदकम् ।
एतद्भेदं[2] समासेन[3] संक्षेपात् शृणु[4] षण्मुख ॥७॥

(शिवतत्त्वात् विकलवर्णातसृष्टिक्रमः)

शिवतत्त्वात् परात् सूक्ष्मात्[5] बिन्दुरूपं तु जायते ।
बिन्दोर्नादः[6] समुत्पन्नः[7] नादात् शक्तिरजायत[8] ॥८॥

---

स्थूलसूक्ष्माकृतिं चैव वर्णानां स्थूलाकारं सूक्ष्माकारं च जीवोपाधिविभेदकं जीवभेदं उपाधिभेदमिति एतद्भेदं उक्तभेदम् समासेन पर्यायतः संक्षेपात् अंक्षेपतश्च षण्मुख ! हे कुमार! शृणु अवधारय ॥७॥

परात् उत्कृष्टात् सूक्ष्मात् व्योमातीतात् शिवतत्त्वात् शिवाख्यतत्त्वात् विन्दुरूपं तु बिन्दु जायते संजातः बिन्दोः जगत्परमोपादानकुण्डलिन्याः सकाशात् नादः समुत्पन्नः सञ्जातः । नादात् नादसकाशात् शक्तिः अजायत समुत्पन्ना ॥८॥

---

(1) सूक्ष्माकृतिश्चैव-- ड. प. फ.
(2) एतत् सर्वं- ड. प.
(3) महासेन- ख. घ. च. झ.
(4) श्रूयतामपि- ड. प.
(5) शिवतत्त्वे परे सूक्ष्मे- ख. ग. च. ज. झ.
(6) नादे- भ.
(7) समुत्पन्नं छे. ट. ब. य. द. प.
(8) नादान्ते सक्तिजायते- ग. घ छ. ज. ट. ठ ड. ढ. त. थ. द. प.

शक्तेस्तु जायते शब्दः शब्दाज्जातं तु[1] वाग्भवम् ।
वाग्भवाच्च[2] कलाः जाताः कलाभ्यो विकलास्तथा[3] ॥९॥

[4]कलाश्च विकलाश्चैव वर्णाश्चैव समुद्भवाः ।

[वर्णोत्पत्तिक्रमः]

प्रणवः प्रथमं प्रोक्तः आ ई ऊ तदनन्तरम् ॥१०॥

---

शक्तेस्तु शक्तेस्सकाशात्तु शब्दः जायते उत्पद्यते । शब्दात् तस्मात् वाग्भवं जातं तु उत्पद्यते । वाग्भवाच्च कलाः जाताः जायन्ते । तथा कलाभ्यः विकलाश्च । जायन्ते इति शेषः ॥९॥

इत्थं कलाश्च कलासंज्ञकाः विकलाश्चैव विकलासंज्ञकाश्च वर्णाश्चैव सर्वे वर्णा अपि समुद्भवाः समुद्भूताः । अथ वर्णानां उत्पत्तिक्रमं कथयति प्रणव इत्यादिना प्रणवः ओङ्कारः प्रथमं पूर्वं प्रोक्तः अभिहितः तदनंतरं ततःपरं आ ई ऊ इत्येते वर्णाः क्रमेण प्रोक्ताः ॥१०॥

---

(1) जायेत- ग. च.

(2) वाग्भवे तु- श्र.

(3) लाः स्मृताः

(4) इदं पद्यं फ. पुस्तके न दृश्यते ।

[1]तस्माद् वाचको मन्त्रः मन्त्रस्तैरेव[2] भिद्यते ।

(उक्तबिन्द्वादिस्वरूपनिरूपणारम्भः)

एवं[3] सृष्टिक्रमः[4] प्रोक्तः[5] तेषां[6] लक्षणमुच्यते ॥११॥

[तत्र-बिन्दु-नादशब्दाः]

[7]बिन्दुरूपा[8] परा शक्तिः नादश्चैवादिरुच्यते[9] ।

---

तस्माद्धि तत्कारणादेव, मन्त्राणां वर्णोद्भूतत्वादेव, मन्त्रः वाचकः इति कथ्यते । स तु मन्त्रः तैरेव बिन्द्वादिभिरेव भिद्यते भेदमुत्पादयति ॥ एवं एतद्रीत्या सृष्टिक्रमः उत्पत्तिक्रमः प्रोक्तः । इदानीं तेषां पूर्वोक्तबिन्द्वादीनां लक्षणं स्वरूपं उच्यते अभिधीयते ॥११॥

पराशक्तिः परमेश्वरस्य निष्कला या शक्तिः सा बिन्दुरूपा भवति । आदिः आदिनाम्नी । या शक्तिः सा नादश्चैव नादस्वरूपेत्युच्यते । शक्तिरित्येते परमेश्वरस्य या इच्छाशक्तिः सा शक्तिरिति विज्ञेया । इह परमेश्व-

---

(1) एतत्पद्यार्धस्थाने फ. पुस्तके "तस्य वाचकमन्त्रश्च मन्त्रः तैरेव भिद्यते" इति पाठः दृश्यते ।

(2) स्तेनैव- प.

(3) एतत्- क. ख. ग. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. तद्- ङ.

(4) क्रमं- ग घ. च. छ ज. ट. ठ ढ. त थ द प.

(5) प्रोक्त- ग. घ. च. छ. च. ट. ठ ढ. त थ. द. प.

(6) ततो- च.

(7) पद्यार्धमिदं ङ. फ. पुस्तकयोः न दृश्यते

(8) रूपं- छ. ट. ठ. द. ध. प. म.

(9) रीरित:- ख.

शक्तिरिच्छेति विज्ञेया[1] शब्दो ज्ञानमिहोच्यते[2] ॥१२॥

[वाग्भवः कलाश्च]

वाग्भवं[3] स्यात् क्रियाशक्तिः कला वै षोडश स्वराः ।
तेषां रूपं द्विधा[4] प्रोक्तं प्रकृतिर्विकृतिस्तथा[5] ॥१३॥

---

रस्य पञ्चशक्तीनां पर्यायनामनिरूपणावसरे ज्ञानं ज्ञानशक्तिरेव शब्दः परमेश्वरस्य इच्छाशक्तेः सकाशाज्जातः वाचकः इति उच्यते ॥

क्रियाशक्तिः परमेश्वरस्य क्रियाशक्तिः वाग्भवं वाग्भवतत्त्वं स्यात् कला वै कलावर्णाः, षोडशस्वराः षोडशसंख्याकाः अकारादयः स्वराः भवन्ति तेषां षोडशस्वराणां रूपं स्वरूपं प्रकृतिः इति तथा विकृतिः इति च द्विधा द्विप्रकारेण प्रोक्तं अभिहितं भवति ।

अत्र यथाप्रोक्तमिति पाठे तेषां बिन्द्वादीनां रूपं स्वरूपं यथाप्रोक्तं यद्वत् कथितं, तथा तद्वत् षोडशस्वरेषु प्रकृतिः इति विकृतिः इति च पर्यायवाचकौ इत्यर्थः ॥

---

(1) विज्ञेयं - क.

(2) शब्दश्च ज्ञानमीरितः - क. ग.

(3) वाग्भवा - क. ख. त.

(4) यथा - क. ख ग घ. च. ज झ ट. ठ. ड. ढ त थ. द. ध. प.

[कलासु प्रकृतिविकृतिवर्णाः]

प्रकृतिः सप्तवर्णाश्च[1] विकृतिस्तु नवार्णकाः[2] ।
अकारश्च इकारश्च[3] उकारश्च[4] ऋकारकः[5] ॥१४॥

लृकारश्चैव एकारः ओकारश्च तथैव च[6] ।
एते सप्त स्वरा प्रोक्ताः[8] प्रकृतिस्तु समीरिताः[10] ॥१५॥

---

प्रकृतिः सप्तवर्णाश्च सप्तस्वराक्षराण्येव प्रकृतिरिति, विकृतिस्तु नवार्णकाः नवस्वराक्षराणि विकृतिरिति च उच्यते । अकारश्च अवर्णश्च इकारश्च इवर्णश्च उकारश्च उवर्णश्च ऋकारकः ऋवर्णश्च–

लृकारश्चैव लृवर्णश्च, एकारः एवर्णश्च तथैव च ओकारश्च ओ-ः वर्णश्चेत्येते सप्त सप्तवर्णाः स्वराः स्वरसंज्ञकाः प्रोक्ताः इमे सप्त स्वरवर्णाः प्रकृतिस्तु प्रकृतिरित्यपि समीरिताः कीर्तिताः अ इ उ ऋ ए ओ इतीमे सप्तवर्णाः प्रकृतिरिति कथ्यन्ते इत्यर्थः ॥१५॥

---

(1) सप्तवर्णानि– ग. घ. च. छ. ज. ट ड. ढ. त. थ. द. ध. प. फ. भ.
(2) नवार्णकं– ग च. ज. त. द.
(3) इकारं च– छ ट ठ ढ. त. थ. द ध.
(4) उकारं च–च. ट. ठ. ढ. त. थ. द. ध. फ.
तथोकारः– थ.
(5) ऋकारकं– ग. घ. छ. ज. ट. ठ. ढ. त. थ. द. फ.
(6) लृकारं चैव– ग. च. ट. ड. ढ. त. थ. द प.
(7) एकारं– ग. घ. छ. ट, ड. ढ. त. थ. द. प. फ. भ.
(8) तथैवोकारमेव च– क ग घ ज, झ. ट. ढ. त. थ. द. प. फ.
(9) प्रोक्तं– घ
(10) विधीयते– फ

शेषास्तु विकृतिः[1] प्रोक्ताः[2] तेषां[3] मुद्भव[4] उच्यते ।

[प्रकृतेर्विकृत्युत्पत्तिः]

अकारजन्यश्चाकारः[5] इकारे त्वी[रात्वी] समुद्भवः[6] ॥१६॥

उकारे चैव [राच्चैव] ऊकारः[7] ऋकारे ऋ(राद्दृ) समुद्भवः[8] ।

ऌकारे चैव[राच्चैव]ॡकारः[9] एकारादै[10] समुद्भवः[11] ।१७॥

---

शेषास्तु परिशिष्टाः नव स्वराः विकृतिः प्रोक्ताः विकृतिरिति कथ्यन्ते । अथ विकृतिरिति कथितानां तेषां नवानां स्वरवर्णानां उद्भवः उत्पत्तिः उच्यते । आकारः आ इत्ययं वर्णः अकारजन्यः अकारोत्पत्तिकः। इकारे तु इवर्णे ईसमुद्भवः ईकारस्योत्पत्तिः भवति ॥१६॥

[उकारे चैव उवर्णे ऊकारः ऊवर्णः जायते इति शेषः । ऋकारे ऋवर्णे ॠसमुद्भवः ॠवर्णस्य समुत्पत्तिः भवतीति शेषः ऌकारे चैव ऌवर्णे ॡकारः वर्णः जायते इति शेषः । एकारात् एवर्णात् ऐसमुद्भवः ऐवर्णस्योत्पत्तिः भवतीति शेषः ॥१७॥

---

(1) शेषाः विकृतयः - क. ख. च. छ. भ.
(2) प्रोक्तं– घ. .
(3) तासां – च.
(4) मुद्भवं – ग. घ. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ. ब.
(5) अकारे चोद्भवाकारं – क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द.
(6) त्वीकारसम्भवः– घ. छ. ज. ट. ठ. ड. ढ. त. थ.
(7) ऊकारं– छ. ट. ड. ढ. त. थ. द. प.
(8) ऋकारे तु ऋकारकः – फ.
ऋकारे ऋसमुद्भवम् ड.
(9) ॡकारं – घ. ड. ढ. त. थ. द. प. फ. भ.
(10) एकारे त्वै – ग. च. ज. फ.
(11) सम्भवः – ट. ड. ढ. त. थ. द.

ओकाराद्दौ'स्तथा ज्ञेयः क्रमेणैव समुद्भवाः[2] ।
एता विकृतयः[3] प्रोक्ताः आकारादिनवार्णकाः ॥१८॥

[ कलारूपाः स्वराः तत्पर्यायनामानि च ]

आकारादि विसर्गांताः[4] एते वै[5] षोडशस्वराः ।
कला मात्राः[6] स्वरा जीवाः प्रकृतिर्विकृतिस्तथा ॥१९॥

---

ओकारात् ओवर्णात् औ औवर्णः तथा जायते इति ज्ञेयः । एवं अकारादिह्रस्ववर्णेभ्यः आकारादिदीर्घवर्णाः क्रमेणैव क्रमश एव समुद्भवाः सञ्जाताः । एते वै आकारादिनवार्णकाः आ ई ऊ ॠ ॡ ऐ औ इत्युक्ताः इमे सप्तवर्णाः बिन्दुविसर्गभूतं अं अः इत्युक्तवर्णद्वयं च सम्भूय नव वर्णाः विकृतिः इति प्रोक्ताः अभिहिताः ॥१८॥

अकारादिविसर्गांताः अकारमारभ्य विसर्गावसानाः एते वै षोडश षोडशसंख्याकाः वर्णाः स्वराः स्वरसंज्ञकाः भवन्ति । कला इति मात्राः इति, स्वराः इति, जीवाः इति, प्रकृतिः इति, तथा विकृतिः इति -॥१९॥

---

(1) ओकारे चौ- ख. ग. च. ज. झ.
ओकारे औ- घ. थ. द प.

(2) समुद्भवः- ख. ग. च. ज. झ.

(3) एते वै विकृतिः- क. ख. च. झ. फं. वर्जम्

(4) विसर्गान्तं- छ. ड प.

(5) चैते वै- भ.
एता वै- ङ

(6) मन्त्राः- थ.

प्राणा आत्मा ना च देही[1] कलापर्यायवाचकाः[2]।
[3]एतानि दश नामानि कलास्वेव प्रयुञ्जते[4] ॥२०॥

[विकलारूपाणि व्यञ्जनानि]

कलाभेदस्त्वयं प्रोक्तः[5] विकलाभेदकं शृणु[6]।
ककारादि क्षकारान्ताः[7] वर्णाश्च विकलाः[8] स्मृताः[9] ॥२१॥

---

प्राणाः इति, आत्मा इति, ना इति, देही इति चेत्येते शब्दाः कलापर्यायवाचकाः कलानां पर्यायेण अभिधायकाः भवन्ति । एतानि दश नामानि दशसंख्यकानिनामानि कलास्वेव स्वरेष्वेव प्रयुञ्जते प्रयोगं कुर्वन्ति । अभिज्ञाः इति शेषः ॥२०॥

एवं अयं कलाभेदस्तु कलाभेदस्तु प्रोक्तः निरूपितः । इदानीं विकलाभेदकं विकलाभेदं शृणु अवधारय। ककारादि क्षकारान्ताः वर्णाः ककारमारभ्य क्षकारावसानाः पञ्चत्रिंशद्वर्णाः विकलाः स्मृताः विकलाः इत्युच्यन्ते ॥

---

(1) प्राणा आत्मा च देही ख- ग. च.
प्राणात्मना च देही- च क. घ. थ द. भ.
प्राणात्मानौ च देही ष-ख. झ.
प्राणश्चात्मा च देही च-भ.
प्राणात्मना च देही च- छ. ठ ढ त द.
प्राणात्मनश्च देही च- फ.

(2) वाचकः- ङ प

(3) एतानीत्यारभ्य- प्रयुञ्जते इत्यन्तो भागः - क छ झ. ट. ठ. ड. ढ त. ध. द. फ. पुस्तकेषु न दृश्यते ।

(4) कलानामेव युज्यते- ख. ग च. ज.

(5) भेदमिदं प्रोक्त- क. ख. ग. घ. च.छ.ज. झ.ट.ठ. ड. ढ.त.थ. द.

(6) भेदमथ शृणु- ड. ब

(7) क्षकारान्त- ड थ. ध. प. फ.

(8) विकलानि- फ.

(9) ततः- फ

[ विकल्पोत्पत्तिः ]

[1]ककारादीनि पञ्चार्णं अकारात्तु समुद्भवम् ।
[3]चकारादीति पञ्चार्णं इकारात्तु समुद्भवम्[4] ॥२२॥

[5]टकारादीनि पञ्चार्णं ऋकारात्तु समुद्भवम् ।
तकारादीनि पञ्चार्णं लृकारात्तु समुद्भवम् ॥२३॥

---

ककारादीनि पञ्चार्णं ककारमारभ्य ङकारान्तानि पञ्चाक्षराणि अकारात्तु अवर्णात्तु समुद्भवं सम्भूतानि । चकारादीनि पञ्चार्णं चकारमारभ्य ञकारपर्यन्तानि पञ्चवर्णानि इकारात्तु इवर्णात् तु समुद्भवं सम्भूतानि ॥२२॥

टकारादीतिपञ्चार्णं टकारप्रभृति णकारपर्यन्तानि पञ्चवर्णानि ऋकारात्तु ऋवर्णादेव समुद्भवं सञ्जातानि तकारादीतिपञ्चार्णं तकारप्रभृति नकारपर्यंतानि पञ्चवर्णानि लृकारात्तु लृवर्णादेव समुद्भवं समुत्पन्नानि ॥२३॥

(1) इदमर्धं- क. घ. छ. ट. ठ. भ. पुस्तकेऽ न दृश्यते ।
(2) ककारादीनि वर्णानि अकारे तु समुद्भवाः- ज.
ककारादीनि वर्णानि इकारे तु समुद्भवाः- ख. च.
ककारादीनि पञ्चार्णाः इकारे तु समुद्भवाः- झ.
ककारादीनि पञ्चार्णं अकारे तु समुद्भवम्- ड. प.
(3) इदमर्धं - क. ख. घ छ. ज. ट ठ ड. ध. प. फ. ब. भ. पुस्तके न दृश्यते ।
(4) चकारादीनि पञ्चार्णाः उकारे तु समुद्भवाः ग च झ. त. थ. द. ढ.
चकारादीनि पञ्चार्णा उकारा तु समुद्भवम्- ड. प.
(5) पद्यमिदं ग्रन्थेष्वदृष्टमपि सन्दर्भौचित्याद् क्रमानुसाराच्चात्र संशोधकैरेव संयोजितम् ॥

[1]पकारादीनि पञ्चार्णं उकारात्तु समुद्भवम्[2] ।
[3]ओकारात्तु समुद्भूताः यकारादि दश स्मृताः[4] ॥२४॥
[5]ककाराच्च[6] समुद्भूताः यकारादि दशाक्षराः ।
एते वै विकलाः प्रोक्ताः ते पञ्चत्रिंशदक्षराः[7] ॥२५॥

---

पकारादीनि पञ्चार्णं पकारमारभ्य मकारान्तानि पञ्चवर्णानि उकारात्तु उवर्णादेव समुद्भवं सञ्जातानि । यकारादि दश यकारमारभ्य क्षकारान्ताः दशवर्णाः ओकारात्तु ओवर्णादेव समुद्भूताः सञ्जाता समुद्भूताः इति स्मृताः ॥२४॥

यकारादिदशाक्षराः यकारमारभ्य क्षकारान्ताः दश वर्णाः ककाराच्च कवर्णाच्च समुद्भूताः सञ्जाताः ते एते वै पञ्चत्रिंशदक्षराः पूर्वोक्ताः इमे ककारादयः पञ्चत्रिंशद्वर्णाः विकलाः प्रोक्ताः विकलसंज्ञकाः इति अभिहिताः ॥२५॥

---

(1) पद्यमिदं– क. ख. ग. छ. ज. ट. ठ. ड, ध.
प. फ. ब. भ. पुस्तकेषु न दृश्यते ।

(2) पकारादीनि पञ्चार्णः एकारे तु समुद्भवाः– ग. च. झ. ड. त. थ द.
पकारादीनि पञ्चार्णं एकारे तु समुद्भवम् ड. प.

(3) पद्यार्धमिदं – क. घ छ. ट. ठ भ पुस्तकेषु न दृश्यते

(4) ओंकारे तु समुद्भूता षदाकारादीनि पञ्चमम् – ड. प. फ.
ओकारात्तु समुद्भूताः यकारादि समुद्भवाः – फ.

(5) पद्यमिदं– क. ख. घ. छ ज. ट ठ. ड ध. प फ. ब. भ.
पुस्तकेषु न दृश्यते ।

(6) ककारे च– क. ख. ग च.
तकारे च– झ.

(7) ककारादि क्षकारान्तं पञ्चत्रिंशदक्षराः स्मृताः – ड. प.

[विकलारूपव्यञ्जनपर्यायनामानि]

**देहोपाधिशरीराणि[1] क्षेत्राधारौ[2] तनुस्तथा ।**
**व्यञ्जनं विकला शक्तिः बिन्दुपर्यायवाचकाः[3] ॥२६॥**

---

देहोपाधिशरीराणि देहः इति, उपाधिः इति, शरीरं इति, क्षेत्राधारौ क्षेत्रमिति, आधारः इति, तथा तनुः तथैव तनुरिति व्यञ्जनं व्यञ्जनमिति विकला विकलेति, शक्तिः शक्तिरिति च बिन्दुःपर्यायवाचकाः बिन्दोः पर्यायाभिधायकाः । देहादिशक्त्यन्तनवपदानि बिन्दोःपर्यायवाचकानीति यावत्।

ननु व्यञ्जनाक्षराणां रूपं लक्षणं च किम्? इत्यत्रोच्यते—

"क, ख. ग. घ. ङ.

च, छ. ज. झ. ञ.

ट, ठ, ड. ढ.ण.

त, थ. द, ध. न.

प. फ, ब. भ. म.

य. र. ल. व. श.

ष. स. ह. ळ. क्ष. "

इति पञ्चत्रिंशदक्षराणि व्यंजनरूपाणि भवन्ति । एतेषां व्यंजनाक्षराणामेव देहादिशब्दवाच्यत्वम्, स्वराणां तु देहीति तु शब्दवाच्यत्वम् । एतद्देहदेहि-वर्णसम्बन्धात् समस्तजगद्व्यवहारो भवति ॥२६॥

---

(1) शरीरं च - ख. ग घ.

(2) क्षेत्राधारः— ग. च.

क्षेत्राधारे- ख. ङ.

क्षेत्राधारं- क.

(3) वाचकः - घ. ठ. ध फ.

[वर्णानां लिङ्गभेदा]

कलानां विकलानां च[1] रूपत्रयमिहोच्यते[2] ।
शिवाग्निभूतरुद्राश्च त्रयोदशतिथिस्तथा ॥२७॥

एते वै स्वरवर्णाश्च[3] पुल्लिङ्गाश्चेति कीर्तिताः ।
पक्षो वेदो रसो भानुः मनुश्चैवाधिकारकम्[4] ॥२८॥

---

इह वर्णभेदपटले कलानां अकारादिविसर्गांतस्वराणाम्, विकलानां च ककारादिक्षकारांतव्यञ्जनाक्षराणां च रूपत्रयं त्रिविधरूपाणि उच्यते अभिधीयन्ते । अथ संख्याभिधानेन वर्णान् निर्दिशति- शिवेत्यादिना । शिवः इति प्रथमाक्षरम्, अग्निरिति तृतीयाक्षरम्, भूतेति पञ्चमाक्षरम् रुद्रेति एकादशाक्षरम्, त्रयोदशाक्षरम्, तथा तिथिः इति पञ्चदशाक्षरम्, क्रमात् अ, इ. उ, ए. ओ. अं इति उक्ताः- ॥२७॥

एते वै स्वरवर्णाश्च उक्ताः स्वररूपाः वर्णाः पुल्लिङ्गाः च इति कीर्तिताः । स्वरवर्णेषु पक्षः द्वितीयाक्षरम्, वेदः चतुर्थाक्षरम्, रसः षष्ठाक्षरम् भानुः द्वादशाक्षरम्, मनुः चतुर्दशाक्षरम् अधिकारकं चैव षोडशाक्षरं चैव – ॥२८॥

---

(1) तु - म.

(2) त्रीणि रूपाणि वक्ष्यते- ख. ग. च म.
त्रयो भेदाश्च वक्ष्यते – ड प

(3) स्वरवर्णानि- क. ग घ छ. ट. ठ ड ढ. त. थ. द ७. प.

(4) मनुश्चैवादिषोडश – प.
मनुश्चैवानुषोडश – ड.

एतानि षट् च बीजानि[1] स्त्रीलिङ्गानीति कीर्तितम्[2]।
ऋ ॠ ऌ ॡ च चत्वारः नपुंसका इति स्मृताः ॥२९॥

ककारश्च गकारश्च चकारश्च जकारकः।
टकारश्च डकारश्च तकारश्च दकारकः ॥३०॥

---

एतानि षट् च बीजानि आ ई ऊ ऐ औ अः इति षट् स्वर-वर्णानि स्त्रीलिङ्गानीति स्त्रीलिङ्गवर्णानीति कीर्तितं कथितम् ।ऋ ॠ ऌ ॡ च चत्वारः ऋ इत्यादयः चत्वारो वर्णाः नपुंसकाः नपुंसकलिङ्गाः इति स्मृताः ॥२९॥

ककारश्च गकारश्च चकारश्च जकारकः जकारश्च टकारश्च डकारश्च तकारश्च दकारकः दकारश्च- ॥३०॥

---

(1) एते वै षट् च नामानि- ग. प.

(2) स्त्रीलिङ्गाश्चेति कीर्तिताः - क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड ढ. त. थ. द. प. फ.

(3) ककारं च गकारं च
चकारं चजकारकम् ।
टकारं च डकारं च
तकारं च दकारकम् ॥-
क. ग घ. च. छ. ज. ट. ठ ड ढ. त. थ. द. प. ब. भ.

पकारश्च बकारश्च षकारश्च सकारकः[1] ।
एते द्वादशवर्णाश्च[2] पुल्लिङ्गाश्चेति कीर्तिताः[3] ॥२१॥

खकारश्च घकारश्च छकारश्च झकारकः ।
ठकारश्च ढकारश्च थकारश्च धकारकः[2] ॥ ३२ ॥

---

पकारश्च बकारश्च षकारश्च क्षकारकः क्षकारश्चेत्येतेद्वा दशवर्णाः द्वादशसंख्याकाः ककारादयो वर्णाः पुल्लिङ्गाश्चेति पुल्लिङ्गवर्णाः इति कीर्तिताः ॥२१॥

खकारश्च घकारश्च छकारश्च झकारकः झकारश्च ठकारश्च ढकारश्च थकारश्च धकारकः धकारश्च ॥३२॥

---

(1) पकारं च बकारं च षकारं च क्षकारकम्– क. ग. घ. च. छ. ट. ठ. ड. ढ. त. थ. द. प. ब. भ. 'क्षकारकः' इत्यस्य स्थाने 'इकारकः'– ख. झ.

(2) वर्णानि– क. घ. छ. ट. ठ. ढ. त थ. द. फ भ बीजानि–ड. प.

(3) पुल्लिङ्गानि विनिर्दिशेत् फ.

(4) खकारं च घकारं च छकारं च झकारकम् ।
ठकारं च ढकारं च थकार च धकारकम् ॥–
क. ग. घ. च. छ. ज. ट. ठ. ड ढ. त. थ. द. प. भ.

(5) धकारकम्– फ.

फकारश्च भकारश्च शकारश्च सकारकः ।[1]
एतानि[2] भानुबीजानि स्त्रीलिङ्गानीति कीर्तितम्[3] ॥३३॥
शेष नपुंसकं[1] विद्यात् तयो भेदाः[3] इतिस्मृताः[4] ।

[स्वराणां पञ्चभूतबीजत्वोपपादनम्]

अकारादि त्रयो व्योम [8]खीकारादि त्रयोऽनिलः ॥३४॥

---

फकारश्च भकारश्च शकारश्च सकारकः सकारश्चेत्येतानि भानुबीजानि द्वादशाक्षराणि, स्त्रीलिङ्गानि स्त्रीलिङ्गवर्णानि इति कीर्तितम् । तथाच–ख, घ. छ. झ. ठ. ढ. थ. ध. फ. भ. श. स. इति खकारादि सकारान्तानि द्वादशबीजानि स्त्रीरूपाणि इत्यर्थः ॥३३॥

शेषं एतच्चतुर्विंशत्यक्षरव्यतिरिक्तानि ङ. ञ. ण. न. म. य. र. ल. व. ह. ळ. इत्युक्तान्येकादशाक्षराणि नपुंसकं नपुंसकानि विद्यात् जानीयात् ।

---

(1) फकारं च भकारं च शकारं च सकारकम्– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. ब. भ.
सकारकम्– फ.
(2) एते वै– क. ग. घ. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ. व.
(3) जायश्चेति प्रकीर्तितम्–फ जायाश्चेति प्रकीर्तिताः– क. ख. ग. छ. झ. ट. ठ. ढ. त. थ. द. भ.
स्त्रीलिङ्गानीति कीर्तिताः– क. ख. च. छ. झ. ट. ठ. ड. त. थ. द. प. भ.
(4) शेषान् नपुंसकान्– ख. झ.
शेषाः नपुंसकाः– ध. द. ढ. फ
(5) विन्द्यात्– ट. द. त. द. ध.
ज्ञेयाः– प. फ.
(6) रूपाः– ड. प.
(7) स्मृतम्– फ.
(8) 'खीकारादित्यारभ्य उपरीतनश्लोकस्थ 'त्रयो ह्यापः' इत्यन्तं– फ, पुस्तके न दृश्यते ।

ऋकारादि त्रयो वर्णाः[1] वैश्वानर इति स्मृताः ।[2]
लृकारादि[3] त्रयो ह्यापः ओकारादि[4] त्रयो मही ॥३५॥

---

इति उक्तरीत्या त्रयो भेदाः त्रयः प्रकाराः स्मृताः । इत्थं कलाक्षराणिं विकलाक्षराणि च स्त्रीपुंनपुंसकलिंगत्वेन त्रिधा ज्ञेयानि । अथ एतेषां पूर्वोक्तानां शोडषस्वराणां पञ्चभूतबीजत्वं निरूप्यते । अकारादीत्यादिना । अकारादि-त्रयः अ. आ. इ. इति त्रयो वर्णा व्योम आकाशतत्त्वबीजानि भवन्ति अकाराकारेकारबीजानि व्योमबीजानि । ईकारादित्रयस्तु ई उ. ऊ. इति त्रयो वर्णाः अनिलाः वायुतत्त्वबीजानि भवन्ति ॥ ॥३४॥

ऋकारादित्रयो वर्णाः ऋ. ॠ. ल इत्येते त्रयो वर्णाः वैश्वानरः इति अग्नितत्त्वबीजानीति स्मृताः । लृकरादित्रयो हि लॄ ए ऐ इत्येते त्रयो वर्णाः

---

(1) ऋकारादिनि वर्णानि- क. ग घ छ ज. ट. ठ. ड. ढ. त. थ द. फ. भ.
ऋकारादित्रिवर्णाश्च- ख. ज.
उकारादित्रिवर्णाश्च- ध.
ऋकारादि चतुर्णां तु- ड. प.

(2) तेषामग्निरिति स्मृताः- क. ग. घ. छ ज ट ठ ड. ढ. त. थ. द. फ भ.
अग्निरित्युच्यते तथा- ध.
तेजो मुक्तिरिति स्मृतम्- प.

(3) एकारादि- ख. ग. च. ज. झ. त. थ.
ओकारादि- क. ध
लृकारादि- ढ.

(4) औकारादि- ग. च. ट. ध. फ भ.

[ व्यञ्जनानां पञ्चभूतबीजत्वम् ]

[1]ककारादिङकारान्ताः लकारश्च ळकारकः ।
पृथिव्यंशाः इति ज्ञेयं चकारादीति पञ्चकम् [2] ॥३६॥

[3]वकारश्च शकारश्च जलांशकाः इति स्मृताः ।
टकारादिणकारान्ताः रकारश्च सकारकः ॥३७॥

---

आपः अपतत्त्वबीजानीति ज्ञेयम् । ओकारादि त्रयः ओ औ अं इति त्रयो वर्णाः मही भूमितत्त्वबीजानि भवन्तीति शेषः ॥३५॥

एं स्वराणां पञ्चभूतबीजत्वमुक्त्वा इदानीं व्यञ्जनानां तदुच्यते— ककारादीति ककारादिङकारान्ताः ककारमारभ्य ङकारावसानाः पञ्चवर्णाः लकारश्च ळकारकः ळकारश्च इत्येते वर्णाः पृथिव्यंशाः पृथिवीतत्वबीजानि भवन्ति इति ज्ञेयम् । चकारादीतिपञ्चकं चकारमारभ्य भकारावसानाः पञ्चवर्णाः— ॥३६॥

वकारश्च शकारश्च जलांशकाः अपूतत्त्वबीजानीति स्मृताः । टकारादिणकारान्ताः पञ्चवर्णाः रकारश्च रेफश्च सकारकः सकारश्च— ॥३७॥

---

(1) 'ककारादि'त्यारभ्य हकारश्च क्षकारकः ' इत्यन्तो भागः प· पुस्तके न दृश्यते ॥

(2) तकारान्तं– फ.

(3) 'लकारं च ळकारकम्, पृथिव्यंशमिति ज्ञेयं चकारादीनि पञ्चकम्' ॥–फ.

(4) वकारं च शकारं च जलांशकमिति स्मृतम् ।
गकारादिणकारान्तं रकारं च सकारकम् ॥-फ.

तेजोंऽशकाः इति ज्ञेयं तकारादीतिपञ्चकम् ।
यकारश्च षकारश्च ह्यनिलांशा इति स्मृतम् ॥ ३८॥

पकारादिमकारान्ताः हकारश्च क्षकारकः ।
व्योमांशकाः इति ज्ञेयं ह्येषा वै त्वंशकस्मृतिः ॥३९॥

---

इत्येते वर्णाः तेजोंऽशकाः अग्नितत्त्वबीजानि भवन्ति इति ज्ञेयम् । तकारादीतिपञ्चकं तकारमारभ्य नकारावसानाः पञ्चवर्णाः यकारश्च शकारश्चेत्येते वर्णाः हि अनिलांशाः वायुतत्त्वबीजानि भवन्तीति स्मृतम् ॥ ३८ ॥

पकारादिमकारान्ताः पञ्चवर्णाः हकारश्च सकारकः सकारश्च त्येते वर्णाः व्योमांशकाः आकाशतत्त्वबीजानि भवन्ति इति ज्ञेयम् । एषा हि वै तु इयमेव हि अंशकस्मृतिः अकारादि क्षकारान्तानां सर्वेषां वर्णानां पृथिव्याद्याकाशान्तपञ्चतत्त्वांशकविभागोक्तिः इति ज्ञेयम् ॥३९॥

---

(1) तेजोंऽशकमिति ज्ञेयं
तकारादिति पञ्चकम् ।
यकारं च षकारं च
अनिलांशमिति स्मृतम् ॥

(2) पकारादिमकारान्तं
हकारं च क्षकारकम् ।
व्योमांशकमिति ज्ञेयं
एते वा अंशकस्मृतिः - फ.॥

[ वर्णानां तत्त्व-मूर्ति-प्रभावात्मना विभागः ]

प्रकृतिः तत्त्वबीजं[1] स्यात् विकृतिः मूर्तिरुच्यते ।[2]
प्रभावो[3] विकलाः प्रोक्ताः[4] इत्येते[5] त्रिविधाः[7] स्मृताः[6] ॥४०॥

---

एवं वर्णानां विभागेन पञ्चभूतबीजत्वमुक्त्वा इदानीं उपरिष्टाद्वक्ष्यमाणचक्रोद्धारे वर्णन्यासोपयुक्तत्रिविधभेदः निरूप्यते– प्रकृतिरित्यादिना ॥ प्रकृतिः प्रकृतिरित्युक्तसप्तह्रस्वस्वराः तत्त्वबीजं तत्त्वबीजात्मकाः भवन्ति विकृतिः पूर्वोक्तनवदीर्घस्वराः मूर्तिः मूर्तिबीजात्मकाः इति उच्यते । विकलाः व्यञ्जनाक्षराणि प्रभावः प्रभावबीजानीति प्रोक्ताः इति इत्थं एते अकारादयोवर्णाः त्रिविधाः तत्त्वप्रभावात्मना त्रिप्रकारवर्णाः स्मृताः ॥४०॥

---

(1) सप्तबीजा– प.
तत्त्वभेदः– झ. ध.

(2) रीरिता– झ.

(3) प्रभाव– छ ड प.
विभावो– झ.

(4) प्रोक्त– प.
प्रोक्तः– च.

(5) इत्येवं– ट. ढ. ध.
इत्येतत्– भ.

(6) त्रिविधं– ख. च. झ. भ.
त्रिविधः– फ.

(7) स्मृतम्– च. ध.
भवेत्– ख. ग. झ.

[ विभक्तानां स्वरूपं मात्राश्च ]

प्रकृतिः ह्रस्वमित्युक्ता[1] विकृतिः दीर्घमुच्यते[2]
एकमात्रो भवेत् ह्रस्वः द्विमात्रो दीर्घ उच्यते ।[3]॥४१॥

---

प्रकृतिः प्रकृतिवर्णः ह्रस्वमिति ह्रस्वनाम्ना उक्ता. विकृतिः विकृतिवर्णः दीर्घं दीर्घनाम्ना उच्यते ह्रस्वः ह्रस्ववर्णः एकमात्रः एकमात्राकालिकः भवेत् दीर्घः दीर्घवर्णः द्विमात्रः द्विमात्राकालिकः उच्यते । प्रकृतिः ह्रस्वाक्षराणि विकृतिः दीर्घाक्षराणि । एकमात्राकालोच्चरितत्वात् प्रकृतिः ह्रस्वो भवति । द्विमात्राकालोच्चरितत्वात् विकृतिः दीर्घो भवतीत्यर्थः ॥४१॥

---

(1) ह्रस्व इत्युक्ता- घ ङ प.

ह्रस्वमित्युक्तः- च.

ह्रस्वमित्युक्त- फ.

(2) दीर्घं उच्यते- ख. ञ.

दीर्घमीरिता- क. ग.

(3) एकमात्रं भवेत् ह्रस्वं द्विमात्रं दीर्घमुच्यते- ट. ड.

एकमात्र भवेत् ह्रस्वः द्विमात्र दीर्घमुच्यते- क. घ. छ. ढ. त. थ

'उच्यते इत्यस्य स्थाने इष्यते इति- ख. ञ, एकमात्र इत्यादिपद्यार्धं फ. पुस्तके न दृश्यते ।

[तेषां अधिदेवताः वर्णगुणाश्च]

[1]त्रिमात्रस्तु प्लुतो ज्ञेयः व्यञ्जनं त्वर्धमात्रकम्[2] ।
मात्रासंख्या त्विति प्रोक्ता तासां लक्षणमुच्यते ॥४२॥
अकारः[3] सर्वदैवत्यः[4] [5]रक्तः सर्ववशीकरः[6] ।
आकारः[7] स्यात् पराशक्तिः श्वेतश्चाकर्षणे[8] भवेत् ॥४३॥

त्रिमात्रस्तु त्रिमात्राकालिको वर्णस्तु प्लुतः प्लुतसंज्ञकः ज्ञेयः व्यञ्जनं तु व्यञ्जनाक्षरं तु अर्धमात्रकं अर्धमात्राकालिकं भवति । मात्रासंख्या ह्रस्वदीर्घप्लुतमात्राणां गणाना तु इति उक्तरीत्या प्रोक्ता । इतः परं तासां कलानां विकलानां च लक्षणं अधिदेवतादिस्वरूपं उच्यते

आकारः सर्वदैवत्यः सर्वदेवतामयः भवति । स च अकारः वर्गादिः वर्णादिश्चेति सर्ववर्णानां श्रेष्ठो भवति । अत एव,

(1) इदमर्धं– ग. च. झ पुस्तकेषु न दृश्यते ।
(2) विकला त्वर्धमात्रं स्यात् इत्येतल्लक्षण भवेत्– ग. च झ.
व्यञ्जन त्वर्धम । स्यात् इत्येवलक्षण भवेत्– क ख ग. घ. च. छ. ज झ. ट. ठ ड. ढ. त थ. द. ध. प. फ. ब. भ.
(3) अकारं– क घ ढ ड. त. थ. द. ध. फ.
(4) देवत्व– ठ ढ त. थ. फ.
दैवत्यं– क. घ. ड.
(5) रक्तं–क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ द ध. प. फ भ
(6) वशीकरं– क ख. ग घ. च. छे. ज. झ. ट. ठी. ड. ढ. त. थ. द. ध. प फ.
शरीरकं – ग.
(7) आकार– ग. ज. ट. ड. ढ. त थ. द. भ.
(8) श्वेत चारुर्षण भवेत्– क ख. ग घ. च. छि. ज. झ ट. ठ ड.ढ. त थ द ध प फ. ब भ.

इकारो[1] विष्णुदैवत्यः श्यामो[2] रक्षाकरो भवेत्[3] ।
मायाशक्तिरितीकारः[4] पीतः स्त्रीणां वशीकरः[5] ॥ ४४ ॥

---

"अक्षराणामकारोऽस्मि" इति भगवद्गीता । पुराणग्रन्थेषु च पञ्चाक्षरी-प्रशंसाप्रकरणे अकारस्य सर्वश्रेष्ठत्वमभिहितम् । व्यंजनवर्णानामपि अकारसंयोज-नाभावे वर्णत्वमेव न घटते । एवं च सर्ववर्णेषु स्वयमेव कारणत्वेनापि स्थित-त्वात् सर्वदेवतामयोऽयं भवति । अयं अवर्णः रक्तः लोहितः सर्ववशीकरः सर्वकार्यवशीकरश्च भवति । आकारः आ इत्ययं वर्णः पराशक्तिः पराशक्ति-देवताकः स्यात् । अयं च वर्णः श्वेतः सितः आकर्षणश्च आकर्षणरूप-कार्यप्रयोजनश्च भवेत् ॥४३॥

इकारः विष्णुदैवत्यः विष्णुदेवताको भवति । अयं च श्यामः श्यामवर्णः रक्षाकरः स्थितिकरश्च भवेत् । ईकारः मायाशक्तिरिति माया-

---

(1) इकारं– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. फ, ब. भ.

(2) विष्णुदैवत्यं श्याम – क. ख ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(3) रक्षणमेव च– क. ख. ग. घ. च. छ. ज झ ट. . ड. ढ. त. थ. द. फ.

रक्षाकरं– ट. प.

(4) तीकारं– य. ट. ठ. ढ. त. थ द ध. भ.

(5) पीतं स्त्रीणां वशीकरम्– क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड ढ त. थ. द ध. प फ. भ.

उकारो[1] वास्तुदैवत्यः
कृष्णो राजवशीकरः[2] ।
ऊकारो[3] भूमिदैवत्यः
श्यामो लोकवशीकरः[4] ॥ ४५ ॥

---

शक्तिदेवताकः इति ज्ञायते । अयं पीतः पीतवर्णः, स्त्रीणां कामिनीनां वशीकरः स्वाधिनीकरणस्वभावश्च भवति ॥४४॥

उकारः वास्तुदैवत्यः वास्तुदेवताको भवति । अयं च कृष्णः कृष्ण-वर्णः राजवशीकरः राज्ञां वशीकरणस्वभावश्च भवति । ऊकारः भूमिदै-वत्यः भूमिदेवताकः श्यामः श्यामवर्णः लोकवशीकरः स्वजनवशीकरण-स्वभावश्च भवति ॥४५॥

---

(1) उकारं– क ट· ठ. ड. ढ. त· थ. द. प· फ ब. भ·

(2) वास्तुदैवत्यं कृष्णं राजवशीकरं– क. ख· ग घ- च. छ. ज. झ. ट.
वायुदैवत्यं- – – -करं– प..(पा)

(3) ऊकारं– क. ख· ग. घ· च· छ· ज. ट. ठ. ड. ढ· त· थ· द· ध.
प· ब· भ·

(4) भूमिदैवत्यं श्यामं लोकवशीकरम्– क· ख. ग· घ· च. छ.
ज झ ट ढ· ड ढ. त थ- द· ध. प· फ ब. भ.

[1]शं च उं च[2]समूर्तिं च छं च[3] भावं च झं च वै[4] ।
वं च[5] ऋं च[6] समूर्तिं च अं च[7] भावं च ठं च वै[8]॥ ३३ ॥

---

भवन्ति । तृतीयवृत्ते तु द्वात्रिंशद्दलानि संति । तस्मात् अष्टानां दलानां वर्णाभावात् चतुर्विंशति लेष्वेव अक्षरन्यासो भवति । एवमेवप्रकारेण ईशानान्तं त्रिवर्गाक्षरन्यासं कुर्यात् ।

षं च षकारं प्रथमावरणस्य अग्निदले लिखेत् । इं च इकारं मध्यमावरणस्याग्निदले लिखेत् । समूर्तिं च इकाराज्जातं ईकारं मध्यमावरणस्याग्निदलोपरिदले लिखेत् । घं च घकारं तृतीयावरणस्याग्निदले लिखेत । भावं च चं च वै ङकारचकारौ पूर्वोक्तप्रकारेण अनलयमयोः मध्यदलयोः लिखेत् ॥३२॥

शं च शकारं प्रथमावरणयाम्यदले लिखेत् । उं च उकारं मध्यमावरणयाम्यदले लिखेत् समूर्तिं च उकारोद्भूतं ऊकारं पूर्ववत् मध्यमा-

---

(1) शश्च उश्च समूर्तिश्च छश्च भावश्च झश्च वै ।
वश्च ऋश्च समूर्तिश्च धश्च भावश्च ठश्च वैं ॥– फ.
ळं च– घ.
(2) इं च– ङ. षं च– क ळुं च– घ.
(3) नम् च– छ. तम् च– ध. थं, च– दृ.
(4) फं च– थ. चम् च– ङ. तम् च– प.
(5) यम् च– भ.
(6) रम् च– क. घ. छ. ग. ट. ठ. ढ थ. द.
(7) टम् च– ग. च. झ. थ. इश्च– क. थश्च– घ. जश्च– प.
(8) पश्च वै– भ.

[1]लश्च लं च[2] समूर्तिं च ड च[3] भावश्च णं च वै ।
रं च एं च समूर्तिं च तं च भावं च दं च वै ॥ ३४ ॥

---

वरणस्य याम्यदलोपरिदले लिखेत् । छं च छकारं बाह्यतृतीयवृत्तयाम्य-दले लिखेत् । भावं च झं च वै जकारझकारौ पूर्वोक्तक्रमतः छकारादुत्तरदलयोः क्रमेण लिखेत् । बं च बकारं प्रथमवृत्तनैरृतदले लिखेत् । ऋं च ऋकारं मध्यमवृत्तस्य नैरृतदले लिखेत् । समूर्तिं च ऋकारोद्भव ॠकारं पूर्वोक्तप्रकारेण निरृतिवरुणयोः मध्यपत्रे लिखेत् । ञं च ञकारं बाह्यवृत्तस्य नैरृतदले लिखेत् । भावं च ठं च वै डठकारौ पूर्वोक्तप्रकारेण ञकारादुपरितनपत्रद्वितये लिखेत् ॥ ३३ ॥

लं च लकारं प्रथमवृत्तस्य वारुणपत्रे लिखेत् । लं च लकारं मध्यमवृत्तवारुणदले लिखेत् । समूर्तिं च लकारोद्भूतं लकारं मध्यमवृत्तस्य वारुणपत्राग्रपत्रे लिखेत् । डं च डकारं बाह्यवृत्ते वारुणदले लिखेत् । भावं च णं च वै अल्पप्राणाक्षरेभ्यः महाप्राणाक्षरोत्पत्तेः खकारादिरेव महाप्राण

---

(1) लश्च लृच समूर्तिश्च
डश्च भावश्च णश्च वै ।
रश्च एश्च समूर्तिश्च
तश्च भावश्च दश्च वै ॥ फ.
मं च- घ.

(2). लु च-क. ट. उं च-थ. नञ्च-ठ. अं च-घ.

(3) दं च-ठ.

[1]यश्च ओश्च समूर्ति[3] च धश्च भावश्च पश्च वै।
मं च अं च समूर्ति च फं च भावं च भं च वै[4] ॥ ३५ ॥

---

इत्युच्यते । डकारोद्भवं ढकारं णकारं च पूर्वोक्तप्रकारेण तृतीयवृत्तस्य वारुणदलाद्यग्रदलयोः लिखेत् । र च रकारं प्रथमवृत्तवायुदले लिखेत् । एं च एकारं मध्यमवृत्तस्य वायुदले लिखेत् । समूर्तिं च एकारोद्भवं ऐकारं वायुकुबेरदलयोर्मध्यदले लिखेत् । तं च तकारं बाह्यवृत्तवायुदले लिखेत् । भावं च दं च वै तकारोद्भवं थकारं दकारं च पूर्वोक्तप्रकारेण बाह्यवृत्तस्थवायुदलाग्रदलयोः लिखेत् ॥ ३४ ॥

यं च यकारं, प्रथमवृत्तकुबेरदले लिखेत् । औं च ओकारं मध्यमवृत्तकुबेरदले लिखेत् । समूर्ति च ओकारोद्भव औकारं कुबेरेशानयोः मध्यमदले लिखेत् । धं च धकारं बाह्यवृत्तकुबेरदले लिखेत् । भावं च पश्च वै ढकारपकारौ पूर्ववत् बाह्यवृत्तकुबेरदलोत्तरवर्तिदलद्वये लिखेत् ।

---

(1) यश्च ओच समूर्ति च
धश्च भावश्च पश्च वैं ।
मश्च अश्च समूर्तिश्च
फश्च भावश्च भश्च वै ॥– फ.

(2) समुक्ति च– प.

(3) दम् च– छ. ठ. ढ. त. द.

(4) क्षज्ञवै– ग. च.

[1]एतान् वर्णांश्च पूर्वादीन् विन्यसेत् प्रथमादिषु ।
एतच्चक्रं महासेन ! रहस्यमतिदुर्लभम् ॥ ३६ ॥

मं च मकारं प्रथमवृत्तेशानदले लिखेत् । अं च अकारसंसक्तबिंदुस्वरूपं मध्यमवृत्तेशानदले लिखेत् । समूर्तिं च अकारसंसक्तबिन्दुद्वयात्मकविसर्ग-स्वरूपं मध्यमावरणस्थेशानेन्द्रदलयोः मध्यमविदिग्दले लिखेत् । फं च फकारं तृतीयावरणस्येशानदले लिखेत् । भावं च भं च वै बकारभकारौ पूर्ववत् तृतीयावरणस्थेशानदलाग्रवर्तिदलद्वये लिखेत् ॥ ३५॥

प्रथमादिषु प्रथमावरणप्रभृतिषु त्रिषु आवरणेषु एतान् वर्णांश्च सकारादिमकारांतव्यापकाक्षर-स्वराक्षर-स्पर्शाक्षराभिधानान् एकदष्टाचत्वारिंश-द्वर्णान् पूर्वादीन् पूर्वां दिशमारभ्य प्रथमावरणाद्यावरणदलगतान् विन्यसेत् । तत्तद्दललक्षणं ज्ञात्वा लिखेत् । एवंप्रकारेण न्यासीकृतैकपञ्चाशदक्षराणां विभागः कथमिति चेत्- व्यापकाक्षरविभागः उच्यते- प्रथमावरणस्य ईशानादिदिग्दलेषु न्यासीकृताक्षराणि- म- य- र- ल- व- श- ष- स-ह- इत्येतानि अष्टौ । हकारस्य शिवबीजत्वात् सः सूक्ष्मकर्णिकायां न्यस्यते । लळयोर-भेदात् लकारे ळकारः अन्तर्गतो भवति । अन्यथा ळकारस्यात्म-बीजत्वात् कर्णिकानिहितात्मबीजभूते अकारे अन्तर्गतोऽपि स्यात् । क्षकारस्य विद्यात्मकत्वात् ज्ञानशक्तिस्वरूपत्वाच्च शिवसमीपस्थाने कर्णिकायाः पूर्वदले वर्तनं युज्यते । तस्मात् व्यापकाक्षराणां दशकमपि न्यस्तं भवति ॥ अथ स्वराक्षरविभागः उच्यते- स्वराक्षराणां तत्त्वबीजमूर्तिबीजभेदेन द्विविधत्वात्

(1) इदं पद्यार्धं- ङ. प. पुस्तकयोः न दृश्यते ।

[ बीजाक्षराधिदेवतान्यासः ]

वर्णानामधिदेवांश्च[1] पूजयेत्तु[2] यथाक्रमम् ।

[ चक्रमहिमा, चक्रपूजाविधिश्च ]

प्रासादादीनि[3] मन्त्राणि[4] सर्वमस्मिन् व्यवस्थितम्[5] ॥ ३७ ॥

---

मध्यमवृत्तस्य पूर्वादिषु अष्टदलेषु अष्टोपदलेषु च वर्तनं क्लृप्तम् । अथ स्पर्शाक्षरविभाग उच्यते– स्पर्शाक्षरभेदानां बाह्यवृत्तस्य पूर्वादिदलत्रयपुरस्थितैकैकदलत्यागात् अवशिष्टचतुर्विंशतिदलेषु चतुर्विंशतिवर्णानां वर्तनं भवति । मकारयकारयोः सहवर्तित्वात् प्रथमावरणे यकारसमीपे मकारो वर्तते । तस्मात् स्पर्शाक्षराणां पञ्चविंशतिरपि न्यासीकृता । एवंप्रकारेण चक्रदलेषु एकपञ्चाशद्वर्णन्यासः साधितः । हे महासेन ! एतत् चक्रं, इदानीमुक्तप्रकारं चक्रम् , रहस्यं एकान्तम् । निगूढमिति यावत् । अतिदुर्लभं इतरैरलभ्यं च वर्तते ॥ ३६ ॥

अतः अस्मिन् चक्रे स्थितानां वर्णानां हकारप्रमुखवर्णानां अधिदेवांश्च शिवतत्त्वप्रमुखवर्णाधिदेवांश्च यथाक्रमं क्रममनतिक्रम्य क्रमशः

---

(1) देवांश्च– ड. ढ द. प.

(2) येत्तान्– क. ख. ट. ठ. ड. त थ. द. प.

यित्वा– झ. ध. फ.

(3) प्रसादा– क. घ. ट. ढ. त. द.

(4) प्रासादाद्विमहामन्त्रौ– ध.

(5) सर्वे तस्मिन् व्यवस्थिताः– फ.

तच्चक्रं[1] पूजयेन्नित्यं
सर्वं[2] पूजासमं भवेत् ।
रोचनाकुङ्कुमाभ्यां तु[3]
कर्पूरागरुचन्दनैः ॥ ३८ ॥

---

पूजयेत्तु पूजन कुर्यादेव । अस्मिन् एतच्चक्रे प्रासादादीनि मन्त्राणि शुद्ध-प्रासादप्रमुखशिवमन्त्र-सदाशिवमन्त्र-महेशमन्त्राणि व्यवस्थितानि । सर्वं आधारशक्तिपूर्वकसमस्तदेवतामन्त्रं अस्मिन् चक्रे व्यवस्थितम् । स्थितिमार्ग-सृष्टिमार्ग-संहारमार्गक्रमेण उद्धारणार्थं एकपञ्चाशद्वर्णरूपेण व्यवस्थित-मित्यर्थः ॥ ३७ ॥

तत् तस्मात् कारणात् चक्रं एकपञ्चाशद्वर्णात्मकमिदं चक्रम् , नित्यं सदा पूजयेत् अर्चयेत् । एतस्य चक्रस्य पूजनं सर्वपूजासमं सकलरूपशिव-पूजासदृशं भवेत् । रोचनाकुङ्कुमाभ्यां तु गोरोचनं कुङ्कुमकेसराभ्यां तु कर्पूरागरुचन्दनैः कर्पूराख्यगन्धविशेषेण अगरुणा श्रीगन्धेन च– ॥३८॥

---

(1) एतच्च– ग. च. ज.

(2) शर्वं– छ.

(3) रोचनात् कुङ्कमेनापि– क. घ. छ. ट. ढ. त. थ. द.
रोचनाकुंकुमोपेतैः– ख. झ. ध.

भूर्जपत्रे लिखेच्चक्रं गुलिकां[1] कारयेद्बुधः[2] ।
शिरसा धारयित्वा तु[3] सर्वकामार्थसिध्दिदम् ॥ ३९ ॥

[ चक्रपूजाफलम् ]

आयुरारोग्यमैश्वर्यं[4] पुत्रपौत्रादि[5]वर्धनम् ।
सर्वरक्षाकरं चैव सर्वव्याधिविदारणम्[6] ॥ ४० ॥

---

बुधः पण्डितः भूर्जपत्रे भूर्जवृक्षपत्रे चक्रं एतत् शिवमयं चक्रम् लिखेत् विलिखेत् । गुलिकां लिखितभूर्जपत्रिकाम् आरकूट-ताम्र-स्वर्णपत्रैः गुलिकाकृतिम्, कारयेत् कुर्याच्च । इदं चक्रं शिरसा उत्तमाङ्गेन धारयित्वा तु धृत्वा धृतं चेत्तत् सर्वकामार्थसिद्धिदं साधकाभिलषितसमस्तप्रयोजन-सिद्धिप्रदं भवति ॥३९॥

पुनश्चेदं चक्रं आयुः दीर्घायुष्यम्, आरोग्यं, नीरोगताम्, ऐश्वर्यं सर्वविधधनकनकादिकं च विदधाति । किञ्च अनेन चक्रेण पुत्रपौत्रादि-

---

(1) कर्णिकां- ज.
कण्डिकां- क. छ. ट. ठ. ड. ढ. त. थ. द. प.
कण्ठे वा- ध.

(2) धारयेद्बुधः- ध.

(3) त्वा चेत्- छ.

(4) ग्यविजयं- फ.
ग्यमैश्वर्यं- प.

(5) पुत्रपौत्राभि- ख. ग. घ. ङ. ध.
पुत्रश्रीसिध्दि- फ.

(6) निवारकम्- ख.
निवारणम्- च. झ. थ. ध.
विनाशनम्- फ.

सर्वदुःखप्रशमनं
सर्वक्षुद्रनिवारणम् ।
भूतप्रेतपिशाचाश्च
वेताल[1]ब्रह्मराक्षसाः ॥ ४१ ॥

यन्त्ररूपधरं दृष्ट्वा
दूरं[2] गच्छन्ति भीरवः ।

---

वर्धनं पुत्राणां पौत्रप्रभृतीनां च वृद्धिर्भवति । परं च सर्वरक्षाकरं सर्वविधरक्षां चैव विदधाति । सर्वव्याधिविदारणं समस्तरोगनिवारकं च भवति ।४०॥

सर्वदुःखप्रशमनं आध्यात्मिकादित्रिविधदुःखनाशकम्, सर्वक्षुद्रनिवारणम्– समस्तक्षुद्रोपद्रवनिवर्तकं च भवति । किञ्च भूतप्रेतपिशाचाश्च भूताः प्रेताः पिशाचा अपि, वेतालब्रह्मराक्षसाः वेतालब्रह्मराक्षसाश्च ॥४१॥

यन्त्ररूपधरं एतन्मन्त्रस्वरूपशिवचक्रधरं पुरुषं दृष्ट्वा अवलोक्य भीरवः भीताः सन्तः दूरं अतिदूरादेव गच्छन्ति अपगच्छन्ति । हे षण्मुख !

---

(1) वेतालाः– ङ. प
भेताल– ग. च. ध.

(2) दूरात्– ख. ग. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. भ. दूरे– फ

[ पटलोपसंहारः ]

चक्रभेदो मया प्रोक्तः[1]
वर्गभेदमथ[2] शृणु ॥ ४२ ॥

इति श्रीवातुलतन्त्रे शुध्दाख्ये
सहस्रग्रन्थसंहितायां चक्रभेदो नाम
तृतीयः पटलः

---

**चक्रभेदः** शिवचक्रप्रकारः **मया** ईश्वरेण **प्रोक्तः** कथितः, **अथ** अनन्तरं **वर्गभेदं** पूर्वोक्तवर्णानां वर्गीकरणभेदं **शृणु** अवधारय ॥४२॥

इति श्री वातुलशुद्धाख्यतन्त्रसहस्रग्रन्थसंहिताव्याख्यायां
चक्रभेदो नाम तृतीयः पटलः

---

(1) चक्रभेदमिदं प्रोक्तम्– क. ग. घ. च. छ. ज. ट. ड. ढ. ढ. त. थ. द. ध. प. फ. भ.
चक्रभेदमयं प्रोक्तः– झं

(2) दमिदं– थ.
दं ततः– ग. च. ज. झ

# अथ वर्गभेदो नाम चतुर्थः पटलः

[ प्रासादमन्त्रनमस्कारात्मकं मङ्गलम् ]

अष्टत्रिपञ्चपरभेद[1][2]कलादिवर्ग[3]
वर्ग[4]त्रयोध्दृतसुभूरि[5]महा[6]मनूनाम् ।

---

सभेदैः वर्णवर्गैस्तु स्थितिसृष्टिलयाभिधैः ।
सात्त्विकादिप्रभेदैश्च त्रिभिस्तैरुध्दृताश्च ये ॥
प्रासादप्रमुखाः मन्त्राः शिवप्रीतिकराः बभुः ।
सर्वमन्त्रतनुः सोऽव्यात् शिवोऽस्मान् सर्वसिद्धिदः ॥

अष्टत्रिपञ्चेति । अत्र प्रासादमन्त्रं अनिशं प्रणमामीति प्रथमं सम्बन्धः । स च प्रासादमन्त्रः शिव-शक्ति-तत्सम्बन्धात्मकः शुद्ध-मूल-तत्त्व-आदि-आत्मभेदेन पञ्चविधः । तं शिवशक्तिसम्बन्धात्मकं शिवमन्त्रं सर्वदा नमस्करोमीत्यर्थः । तमेव प्रासादमन्त्रं विशिनष्टि— अष्टेत्यादिना । कलादि-

---

(1) इदं पद्यम्- ख फ पुस्तकयोः न दृश्यते ।
(2) परिभेद- क. घ. छ. ट. ऊ. ड. ढ. त. थ. द. ध.
(3) वर्ण- क. घ. ञ. ङ. प.
वर्ण- ट. ठ. त. थ. द. ध.
(4) वर्ध- प.
' वर्गत्रयेत्यारभ्य स्थितिमार्गं प्रकीर्तितं ' इत्यन्तो भागः ठ. पुस्तके न दृश्यते ।
(5) सुभूति- क. ड. थ. प.
(6) गुह्य- छ.

मध्येऽद्वयं[1] परममाद्यमनन्तशक्तिं
प्रासादमन्त्र[2]मनिशं प्रणमामि नित्यम् ॥ १ ॥

---

वर्णानां वर्गास्तावत्- सृष्टिवर्गः, स्थितिवर्गः, संहारवर्गः इति त्रेधा भवन्ति। तत्र सृष्टिवर्गः अष्टविधः, स्थितिवर्गः त्रिविधः, संहारवर्गः पञ्चविधः। अयं च भेदः पूर्वोक्तसृष्ट्यादिवर्गापेक्षया अन्यः। एवं कलाद्यक्षराणां सृष्टि-स्थिति-लयात्मकाः वर्गाः एतादृशभेदयुक्ताः भवन्ति। अथ प्रासादमन्त्रश्च एतादृश-वर्गविशिष्टो भवति। अत एवायं मन्त्रः **अष्ट-त्रि-पञ्च-परभेदकलादिवर्गः** इत्युक्तः। पुनः प्रासादमन्त्रं विशेषयति– **वर्गत्रयेत्यादिना**। **वर्गत्रयेत्यनेन** सृष्टि-स्थिति-संहाराख्यवर्गत्रयं गृह्यते। सृष्टिवर्गः वर्णमालाक्रमः। स्थितिवर्गः चक्रे वर्णविन्यासक्रमः। संहारवर्गः क्षकारादिवर्णविलोमक्रमः। प्रासादमन्त्रा-भिधानाः शिवमन्त्राः स्थितिक्रमेणोद्ध्रियन्ते। सदाशिवपञ्चब्रह्माङ्गादिमन्त्राः सृष्टिक्रमेणोद्ध्रियन्ते। रुद्रमन्त्राश्च संहारक्रमेणोद्ध्रियन्ते। एवं क्रमत्रयेणोध्दृतानां अनेकमहामन्त्राणां मध्ये अयं प्रासादमन्त्रः अनुपमो भवति। अत एव **वर्गत्रयोध्दृतसुभूरिमहामनूनां मध्येऽद्वयं** इति प्रासादमन्त्रो विशिष्यते। पुनश्च प्रासादमन्त्रं विशिनष्टि– **परममित्यादिना**। सर्वोत्कृष्टमित्यर्थः। **आद्यं** जगदादावेव शिवात्मना स्थितम्। **अनन्तशक्तिं** शिवात्मना पराशक्त्याद्यनन्तशक्तिविशिष्टम्। **नित्यं** शिवात्मना सर्वदा सर्वत्र वर्तमानतया देशकालादिपरिच्छेदशून्यमित्यर्थः ॥१॥

---

(1) मध्यद्वयं– ह. द
मध्ये द्वयं– ग. च. ज.
मध्ये त्वयं– झ.

(2) प्रासादमेव– ध.

[ वर्गभेदनिरूपणप्रतिज्ञा, वर्गत्रयं च ]

वर्गभेदं प्रवक्ष्यामि
समासात् शृणु षण्मुख !
वर्गस्तु[1] त्रिविधः[2] प्रोक्तः[3]
[4]प्रथमः[5] स्थितिरुच्यते[6] ॥ २ ॥

---

हे षण्मुख ! षडानन ! वर्गभेदं वर्गाणां प्रभेदम् , समासात् संग्रहेण प्रवक्ष्यामि प्रवदामि, शृणु श्रूयताम् । वर्गस्तु वर्गस्तावत् त्रिविधः शिवमन्त्रादिमन्त्रोद्धारनिमित्तभूतवर्गाणां भेदः त्रिप्रकारः प्रोक्तः कथितः । तत्र त्रिवर्गेषु प्रथमः आद्यः वर्गः स्थितिः स्थितिनामकवर्गः इत्युच्यते ॥२॥

---

(1) वर्गं तु– क. ग. घ. छ. ज. ट. ड. ढ. त. थ. द. प.

(2) त्रिविध– च. फ.
त्रितयं– क. ग. घ. छ. ज. ट. ड. थ.
तृतीयम्– छ. ढ. द. प.
तृतीयकं– त.

(3) प्रोक्त– क. ग. घ. च. छ. ट. ढ थ. द. प. फ.

(4) 'प्रथमः' इत्यारभ्य 'राजसम् तु प्रशाम्यते'
इत्यन्तो भागः– फ. पुस्तके न दृश्यते ।

(5) प्रथम– क. ग. घ छ. ज. ट. ड. त. थ. द. प फ.

(6) स्थितिवर्गकः– ख. क्ष.

सृष्टिवर्गो द्वितीयः[1] स्यात्
संहारस्तु[2] तृतीयकः[3] ।

[ वर्गत्रयस्यावान्तरभेदाः ]

स्थितिमार्गः[4] त्रिवर्गः[5] स्यात्
सृष्टिरष्टविधा[6] भवेत् ॥ ३ ॥

---

**सृष्टिवर्गः** सृष्टिनामकवर्गः **द्वितीयः स्यात्** द्वितीयवर्गो भवति । **संहारस्तु** संहारनामकवर्गस्तु **तृतीयकः** तृतीयवर्गो भवति । **स्थितिमार्गः** पूर्वोक्तस्थितिवर्गाभिधानः स्थितिमार्गः **त्रिवर्गः** त्रिप्रकारः **स्यात्** । **सृष्टिः** सृष्टिनामकः पूर्वोक्तद्वितीयवर्गश्च **अष्टविधा** अष्टप्रकारः **भवेत्** ॥३॥

---

(1) द्वितियं सृष्टिवर्गं– क ग. घ. च. छ ज. ड. ढ. त थ द.
द्वितीयः सृष्टिवर्गः– ख. (पा) घ.

(2) संहारं तु– क. घ. छ। ज. ट. ड. ढ. थ.
संहारकं– त.

(3) तृतीयकम्– क. ग. घ. छ. ज. ट. ड. ढ. त. थ. द प.

(4) मात्र– क. ख (पा) घ. छ. ट. ड. ढ. त. थ. द. प.

(5) त्रिवग– क. ख. ग. घ. च छ. ज. ट. ड. ढ. त. थ. द. प.

(6) सृष्टिश्चाष्टविधम्– क. घ. छे. ट. ड. द. त. थ. द. प.
सृष्टिश्चाष्टविधा– ख. ग च. ज

संहारः[1] पञ्चवर्गः स्यात् तेषां लक्षणमुच्यते ।

[ वर्गत्रयलक्षणनिरूपणम् तत्र प्रथमः स्थितिवर्गः ]

चक्रे यथा स्थिता वर्णाः[3] तथा वै स्थितिरुच्यते[4] ॥ ४ ॥

[ स्थितिवर्गे प्रथमवर्गः ]

प्रथमावरणे वर्णं सकारादीति चाष्टकम्[5] ।

---

संहारः पूर्वोक्तः तृतीयः संहारवर्गः पञ्चवर्गः स्यात् पञ्चधा भिद्यते । तेषां सृष्टिसंहारेत्युक्तवर्गत्रयाणाम् लक्षणं स्वरूपम्, उच्यते कथ्यते । चक्रे चक्रावरणत्रितये यथा वर्णाः स्थिताः यथा व्यापकाक्षर-स्वराक्षर-स्पर्शाक्षराणि आवरणान्तर्गतानि संति, तथा वै तादृशत्रिविधवर्णस्थितिः स्थितिः स्थितिवर्गः इति इति उच्यते अभिधीयते ॥४॥

प्रथमावरणे चक्रस्य प्रथमवृत्ते विद्यमानानि सकारादीति चाष्टकं सकारप्रभृतिअष्टसंख्याकं वर्णं वर्णसमुदायः, स च- स, ष, श, व, र, ल, य,

---

(1) सहारं- क. घ. छ ट. ड. ढ. त. थ. द. प.

(2) वग- क. ख. ग. घ. च. छ. ज. ट. ड. ढ. त. थ. द. प.

(3) स्थितं वर्ण- क. ग. च. छ. ज. झ. ट. ड. ड. ढ. त. थ. द. ध. प. फ.

(4) रीरिता- ख. झ.

(5) सकाराष्टवर्णाश्च प्रथमावरणे लिखेत्- ख. झ.
सकाराद्यक्षराणां तु प्रथमावरणे यजेत् - ध.
प्रथमावरणे वर्गं सकारादीनि चाष्टकम्- क. ग. च. ज.

प्रथमो वर्ग इत्युक्तः सात्विको नाम चोच्यते[1] ॥ ५ ॥

[ स्थितिवर्गे द्वितीयः वर्गः ]

द्वितीयावरणे वर्ण[2] अकारादीति[3] षोडशम्[4] ।

---

वर्णसमुदायः प्रथमवृत्तपूर्वदलस्थितसकारादीशानदलगतमकारान्तानि अष्टौ वर्णानि प्रथमो वर्गः इति स्थितिवर्गस्य प्रथमवर्गः इति उक्तः अभिहितः । अयं च प्रथमवर्गः सात्विको नाम च सात्विक इति च उच्यते अभिधीयते ॥५॥

द्वितीयावरणे द्वितीयवृत्ते विद्यमानानि अकारादीनि अकार प्रभृतीनि षोडशं षोडशसंख्याकानि वर्णं अक्षराणि पूर्वदलगतं अकारमारभ्य ईशानदलगतविसर्गान्तषोडशस्वरवर्णाः द्वितीयो वर्गः इति स्थितिनामवर्गस्य

---

(1) प्रथमं वर्गमित्युक्तं सात्विकं नाम चोच्यते– क. ग. घ. च छ. ज. ट. ठ ड. ढ. त. थ. द.
प्रथमो वर्ग इत्युक्तः सात्त्विको नामधेयकम्– ख. झ.

(2) वर्णाः– ख. झ.
वर्णान्– घ.

(3) दीनि– क. ग. च. ज.
द्याश्च– ख. झ.

(4) षोडश– ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. त. थ. द.
षोडशः– ठ द

द्वितीयो वर्ग इत्युक्तः[1] राजसस्तु प्रशस्यते[2] ॥ ६ ॥

[ स्थितिवर्गे तृतीयवर्गः ]

तृतीये तु ककारादि चतुर्विंशतिवर्णकाः ।

---

द्वितीयो वर्गभेद इति उक्तः अभिहितः । अयं च स्थितिद्वितीयवर्गः राजसस्तु राजसनामकः प्रशस्यते प्रशस्तो भवति ॥६॥

तृतीये तु चक्रस्य तृतीयावरणे विद्यमानाः ककारादि ककारप्रभृति-चतुर्विंशतिवर्णकाः चतुर्विंशतिसंख्याकवर्णाः तृतीयावरणेऽपि पूर्वदलमारभ्य ईशानान्तचतुर्विंशतिदलेषु लिखितककारादिभकारान्तचतुर्विंशतिस्पर्शाक्षराणि

---

(1) द्वितीयम् वर्गमित्युक्तं – क. ग. घ. च. छ. ज. ट. ठ. ड. ढ त

ध द. प.

द्वितीयम् वर्गमित्याख्यम्– ग्र.

(2) राजसं संप्रकीर्तितम्– ख. भ्र.

राजसं तु प्रशस्यते– क. ग. घ. च. छ. ज. ट. ठ. ड त. द.

(3) चतुर्विंशाक्षरं तथा– क. ग घ. च. छ. ज. ट. ठ. ड. ढ. त. थ.

द. ध.

चतुर्विंशतिवर्णकान्– ख. ग्र.

तृतीयो[4] वर्ग इत्युक्तः[5] तामसश्चेति कीर्तितः[6] ॥ ७ ॥
वर्गाणां त्रितयं चैव स्थितिमार्गे प्रकीर्तितम्[3] ।

[ स्थितिमार्गेण मन्त्रोध्दारः ]

पञ्च प्रासाद[4]मन्त्रांश्च[5] स्थितिमार्गेण चोध्दरेत् ॥ ८ ॥

---

तृतीयो वर्गः इति स्थितिवर्गस्य तृतीयो वर्गभेदः इति उक्तः अभिहितः । अयं च तृतीयवर्गः तामसश्चेति तामसनाम्ना कीर्तितः कथितः ॥७॥

एवं स्थितिमार्गे पूर्वोक्तस्थितिमार्गे वर्गाणां सात्त्विकादिवर्गाणाम् त्रितयं चैव त्रयमेव प्रकीर्तितं कथितम् । पञ्चप्रासादमन्त्रांश्च शुद्ध-मूल-तत्त्व-आदि-आत्माभिधानपञ्चसंख्याकान् प्रासादमन्त्रान् स्थितिमार्गेण च एतच्चक्रत्रिवर्गाक्षरस्थितिमार्गेणैव उद्धरेत् उद्धरणं कुर्यात् ॥ ८ ॥

---

(1) तृतीय- क. ट त. थ. द प.
तृतीयम्- ग. घ. च. छ. ज. ट. ठ ड.
(2) वर्गमित्युक्तं- क. ग घ. च. झ. ज. ट. ठ. ड. ढ. त. थ. द प.
(3) तामसं चेति कीर्तितम्- क. ग. घ. च. ज. ट. ठ. ड. ढ. त. थ. द प.
तामसं नामधेयकम्- ख. झ.
(4) वर्गभेदो मया प्रोक्तः स्थितिमार्गे प्रकीर्तितः- ख.
वर्गभेदमिदं प्रोक्तं स्थितिमार्गं प्रकीर्तितम्- क. ग. घ. च. छ. ज. झ. ट. ठ ड ढ. त. थ. द. प.
त्रिवर्गभेदा श्रुतिज्ञान स्थितिमार्गं प्रकीर्तितम्- फ.
(5) प्रसाद- क. घ. च. छ ट. ठ. त. द.
(6) मन्त्राणि- क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द.

[ द्वितीयः सृष्टिवर्गः ]

एवं स्थितिक्रमः प्रोक्तः[1] सृष्टिमार्गं[2] ततः शृणु ।
अकारादिक्षकारान्त[4]वर्णानां सृष्टिरुच्यते ॥ ९ ॥

[ सृष्टिवर्गानुबन्धिनां अष्टवर्गाणां निरूपणम् ]

तस्मात् सृष्टिक्रमेणैव वक्ष्यन्ते चाष्टवर्गकाः[5] ।

---

एवं उक्तप्रकारेण स्थितिक्रमः स्थितिमार्गक्रमः प्रोक्तः अभिहितः । ततः एवं स्थितिमार्गश्रवणानन्तरम् , सृष्टिमार्गं सृष्टिमार्गक्रमम् , शृणु । अकारादिक्षकारान्तवर्णानां अकारमारभ्य क्षकारपर्यन्तानां वर्णानाम् क्रमः सृष्टिः सृष्टिमार्गः इति उच्यते अभिधीयते ॥९॥

तस्मात् सृष्टिक्रमेणैव सृष्टिमार्गनिरूपितक्रमेणैव अष्टवर्गकाश्च अष्टवर्गाः वक्ष्यन्ते पृथक् पृथगभिधीयन्ते । तत्र अष्टवर्गेषु अवर्गं अकारादि-

---

(1) क्रम प्रोक्तं– क. ग घ. ङ. ज. ट. ठ. ड. ढ. त. ध. द. ध प. फ

(2) सृष्टिवर्गं– फ.

(3) त्वतः– ध.
अतः– फ.

(4) क्षकारान्तं– फ.

(5) अष्टवर्गाणि चोच्यते– क. ग. घ. च. छ ज. ट. ठ. ड. ढ. त. थ. द. प. फ.
अष्टवर्गो निरूप्यते– ध.

अवर्गं प्रथमं विद्यात्[1] ऐन्द्रवर्ग[2] उदाहृतः[3] ॥ १० ॥

द्वितीयस्तु कवर्गश्च[4] वह्निवर्गः प्रकीर्तितः[5] ।

चवर्गस्तु तृतीयश्च याम्यवर्ग उदाहृतः ॥ ११ ॥

---

विसर्गान्तस्वराक्षरवर्गम् , प्रथमं प्राथमिकम् विद्यात् जानीयात् अयं च वर्गः ऐन्द्रवर्गः इन्द्रसम्बन्धी वर्गः इति उदाहृतः कथितः ॥१०॥

कवर्गश्च ककारादिङकारान्तपञ्चाक्षरवर्गः, द्वितीयस्तु द्वितीयवर्गः भवति । स च वह्निवर्गः अग्निवर्गः इति प्रकीर्तितः कथितः । चवर्गस्तु चकारादिञकारान्तपञ्चाक्षरवर्गस्तु तृतीयश्च तृतीयवर्गः भवति । अयं च वर्गः याम्यवर्गः यमसम्बन्धी वर्गः इति उदाहृतः अभिहितः ॥११॥

---

(1) विन्द्यात्– क ट. ढ. त. थ. द. ध.

(2) ऐन्द्रीवर्ग- ग. च.
ऐन्द्रवर्ग– क. घ. छ. ज. ट. ड. ड. ढ. त. थ. द. फ.
ऐन्द्र वर्ग– ध.
ऐन्दुवग– प.

(3) उदाहृतम्– क. घ. छ. ज. ट ठ. ड. ढ. त. थ. द. ध. प.
प्रधानकम्– फ.

(4) स्तु– ध.

(5) उदाहृतः– स्व. (पा)

(6) द्वितीयं वै कवर्गं स्यात्
वह्निवर्गं उदाहृतम् ।
चवर्गं तु तृतीयं स्यात्
याम्यवर्णमुदाहृतम् ॥– क. ग. घ च. छे. ज. ट. ठ ड. ढ. त. थ. द. प. फ

टवर्गस्तु चतुर्थश्च[1] नैर्ऋतो[2] वर्ग ईरितः ।
पञ्चमस्तु तवर्गश्च[3] वारुणो[4] वर्ग[5] ईरितः[6] ॥ १२ ॥

---

टवर्गस्तु टकारादिणकारान्तपञ्चवर्गस्तु चतुर्थश्च तुरीयः भवति । अयं च टवर्गः नैरृऋतो वर्गः निऋतिसम्बन्धी वर्गः इति ईरितः अभिहितः । तवर्गश्च तकारादिनकारान्तपञ्चाक्षरवर्गश्च पञ्चमस्तु पञ्चमवर्गः भवति । स च वारुणो वर्गः वरुणसम्बन्धी वर्गः इति ईरितः कथितः ॥१२॥

---

(1) टवर्गं तु चतुर्थं स्यात्- क. ग. घ. च. छ. ज. ट. ठ ड ढ त. थ. द. प. फ.
टवर्गं तु चतुर्थो वै- ख

(2) नैरुत्यं- क. ग. घ. च. छ ट. ठ ड. ढ. त. थ. द. प.
नैऋत्यं- ज.
अनैन्द्रं- फ.

(3) वर्गमुच्यते पञ्चमं तु तवर्गं च- क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ द. प. फ.
वर्गमुच्यते । पञ्चमं तु तवर्गं स्यात्- ख.

(4) वारुणं- क ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द फ.
वरुणम्- प.

(5) वर्गं- क. ग. घ ch. छ. ज. ट. ठ. ड. ढ. त. थ. द. ख. प.
नाम- फ.

(6) उच्यते- क. ग. घ. च. छ. ज. ट. ठ ड. ढ. त. थ. द. प. फ.
इष्यते- ख.

षष्ठं विद्यात् पवर्गं च[1] मरुद्वर्ग उदाहृतः[2] ।
सप्तमस्तु[3] यवर्गश्च[4] कौबेरो वर्ग[5] ईरितः[6] ॥ १३ ॥

---

पवर्गं पकारादिमकारान्तपञ्चाक्षरवर्गं षष्ठं षष्ठवर्गं विद्यात् जानीयात् । स च मरुद्वर्गः इति उदाहृतः अभिहितः । यवर्गश्च यकारादिलकारान्तचतुरक्षरवर्गस्तु सप्तमस्तु सप्तमवर्गस्तु भवति । स कौबेरो वर्गः कुबेरसबन्धी वर्गः इति ईरितः कथितः ॥ १३॥

---

(1) पवर्गं षष्ठमाख्यातं– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ
पवर्गः षष्ठ अख्यातः– ख. (पा)
षष्ठं त्रिन्द्यात् पवर्गं च– ख
पवर्गं षष्ठमेव हि– ञ.

(2) मारुतं नाममुच्यते– फ.
मरुद्वर्गमुदाहृतम्– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.

(3) सप्तमश्च– ख. ञ.

(4) यवर्गं तु– ध.

(5) वर्गं– ध.

(6) सप्तम तु यवर्गं स्यात् कौबेरं वर्गमुच्यते– क. ग. घ. च. छ. ज. झ. ट. ठ. ड ढ. त. थ द.
सप्तमं तु यवर्गं स्यात् कौबेरो वर्गमुच्यते– प.
यवर्गं सप्तमं विद्यात् सोमवर्गमुदाहृतम्– फ

शवर्गं चाष्टमं विद्यात्[1] ईशवर्ग उदाहृतः[2] ।
एते वै चाष्टवर्गाश्च[3] सृष्टिमार्गं समीरिताः[5] ॥ १४ ॥

---

शवर्गं च शकारादिक्षकारान्तषडक्षरवर्गं अष्टमं अष्टमवर्गं विद्यात् जानीयात् । स च ईशवर्गः इति उदाहृतः अभिहितः । एते वै चाष्टवर्गाश्च पूर्वोक्ताः इमे अवर्गप्रभृतयः अष्टवर्गाः सृष्टिमार्गसमीरिताः सृष्टिमार्गनाम्ना सम्यगभिहिताः ॥

अत्रायं वर्गविभागसंग्रहः—

पूर्वोक्तवर्गविभागश्लोकश्रुतषोडशस्वराणि, ककारादिङकारान्तं पञ्च, चकारादि ञकारान्तं पञ्च, टकारादि णकारान्तं पञ्च, तकारादि नकारान्तं पञ्च, पकारादि मकारान्तं पञ्च, यकारादि वकारान्तं चत्वारि, शकारादिक्षकारान्तं षट् चेत्येतानि संभूय एकपञ्चाशदक्षराणि क्रमात् इन्द्र-अग्नि-यम-निरृति-वरुण-वायु-कुबेर-ईशानाभिधानाः अष्टौ वर्गाः सृष्टिमार्गः इत्युच्यते इति ॥१४॥

---

(1) अष्टमस्तु शवर्गं स्यात्– ख. (पा).
अष्टमं तु शवर्गं तत्– ध.
अष्टमं तु शवर्गं स्यात्– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ.

(2) ईशानस्यमुदाहृतम् - ढ. प.
वर्गभेदमुदाहृतम्– फ.
ईशवर्गमुदाहृतम्– क. ग. घ. च. छ. ज. ट. ठ. ड. त. थ. द. ध.

(3) एते वै चाष्टभेदाश्च– प.
एतेषां चाष्टवर्गाणाम्– फ.
एते वै चाष्टवर्गास्ते– ख.
एते वै चाष्टवर्गाः स्यात् ट.

(4) मार्गं– क. ग. घ. छ. ज. ट. ठ ड. ढ. त. थ. द. फ.
वर्गं– प.

(5) उदाहृतः– ख.
उदाहृतम्– क. ग. घ. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ.

[ सृष्टिमार्गेण मन्त्रोद्धारः ]

सदाशिवस्य[1] मन्त्रांश्च[2] पञ्चब्रह्माङ्गमेव च[3] ।
सौम्यमन्त्रान्[4] समस्तांश्च[5] सृष्टिमार्गेण[6] चोद्धरेत्[7] ॥ १५ ॥

---

सदाशिवस्य सदाशिवभट्टाकारस्य मन्त्रांश्च मनूंश्च, पञ्च ब्रह्म सद्योजातादीशानान्तमन्त्रांश्च, अङ्गमेव च हृदयाद्यस्त्रान्तषडङ्गमन्त्रांश्च, समस्तान् सौम्यमन्त्रांश्च सृष्टिमार्गेण सृष्टिवर्णक्रमेण उद्धरेत् उद्धरणं कुर्यात् ॥१५॥

---

(1) शिवस्तु– प.
शिव– छ.

(2) मन्त्रस्तु– ग. च. मन्त्रांस्तु– ख. (पा) ठ. द
मन्त्रास्तु– क. घ. छ ज. ट. ड. ढ. त. थ. ध.

(3) तु– थ.

(4) मन्त्रास्तु– च.
मंत्राश्च– क. ग घ. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(5) सर्वं च– क. ख. (पा) ग. घ. च. छ. ज. ट. ठ ड. ढ. थ. द. प.
सर्वाश्च– फ.
सर्वे वै – ध.
सर्वेभ्यः– त.

(6) अष्टवर्गेण– फ.

(7) गोचरेत्– फ
चोध्दृता – क. घ. ट. त. द. प.
चोध्दृताः– ख. (पा) ग. च. ज. ठ. ड. ढ. थ. ध.

[ तृतीयः संहारवर्गः ]

एवं सृष्टिक्रमः प्रोक्तः[1] संहारं च ततः शृणु ।
[2]क्षकारादि अ(त्व)कारान्तं संहारश्चेति[3] कीर्तितम्[4] ॥ १६ ॥

[ संहारवर्गानुबन्धिनां पञ्चवर्गाणां निरूपणम् ]

क्षकारादि यकारान्तं[5] दशार्णं[6] प्रथमं विदुः ।

---

एवं अनया रीत्या सृष्टिक्रमः अकारादिक्षकारान्तवर्णानां सृष्टिक्रमः प्रोक्तः अभिहित । ततः सृष्टिक्रमश्रवणानन्तरम्, हे षण्मुख ! संहारं च संहारनामकवर्गम् , शृणु । क्षकारादि अकारान्तं तु क्षकारमारभ्य अकारान्त-विलोमवर्णजातं तु संहारः इति संहारवर्गः इति कीर्तितं अभिहितम् ॥ १६॥

क्षकारादियकारांतं क्षकारमारभ्य यकारावसानम्, क्ष-ळ ह-स-ष श-व-ल-र याभिधानम् , दशार्णं दशाक्षरजातम् , संहारवर्गस्य प्रथमं प्रथमं

---

(1) क्रमं प्रोक्त- क ग. घ. छ. ज. ट ठ. ड. ढ. त. थ. द. प. फ.
(2) पद्यार्धमिदं- ङ. प. पुस्तकयोः न दृश्यते ।
(3) संहारं चेति- फ.
संहारमिति- क. ख ग. च. छ. ज. ड. ट. ठ. ड. ढ. त थ. द. प.
(4) कीर्तितः- घ.
चोच्यते- ख (पा) ग. च ज
(5) यकारान्त- क्ष.
(6) दशाकं- क. ख. (पा) ग. घ. च. छ ज. ट. ठ. ड ढ. त थ. द. ध. प.

[1]पार्थिवो वर्ग[2] इत्युक्तं[3] मकारादि[4] दशाक्षरम्[5] ॥ १७ ॥
द्वितीयो वर्ग[6] इत्युक्त[7] ह्यापो[8]वर्ग उदाहृतः[9] ।
णकारादि चकारान्तं तृतीयं चानलं विदुः ॥ १८ ॥

---

वर्गं विदुः जानन्ति । आगमरहस्यविज्ञाः इति शेषः । अयं च वर्गः पार्थिवो वर्गः इति पृथिवीसम्बन्धी वर्गः इति उक्तं कथितम् । मकारादि-दशाक्षरं मकारमारभ्य तकारपर्यन्तदशवर्णजातम्– ॥१७॥

संहारमार्गे द्वितीयो वर्गः इत्युक्तम् द्वितीयवर्गः इति तद्विज्ञैः कथितम् । अयं च ह्यापोवर्गः आपोवर्ग इति उदाहृतः कथितः । णकारादिचकारान्तं णकारमारभ्य चकारावसानं दश वर्णजातम्, तृतीयं संहार-वर्गे तृतीयवर्गम् , अनलं च अनलवर्गं चेति विदुः जानन्ति । एतद्वर्गरहस्य-विज्ञाः इति शेषः ।।१८।।

---

(1) " पार्थिवः " इत्यारभ्य ' चतुर्थं मारुतं विदुः ' इत्यन्तो भागः ' फ ' पुस्तके न दृश्यते ।
(2) पृथिवीवर्गः– भ.
पार्थिवं वर्ग– क. ग. घ. च छ. ज. ट. ठ ड. ढ. त. थ. द प.
(3) इत्युक्तः– ख.
(4) (क्ष)कारादि- ग. च.
(5) तकारकम्- भ
(6) द्वितीयं वर्गं- क. ग घ. च. छ. ज. ट ठ. ड. ढ त. थ. द. ध प.
(7) इत्युक्तः– ख. (पा).
इत्येव– ख. भ.
(8) आपो– ख. . क्ष.
(9) वर्गमुदाहृतम्– क. ग. च. छ. ज. ट. ठ. ड. ढ. थ. ध.

ङकारादिककारान्तं चतुर्थं मारुतं विदुः[1] ।
अःकारादि ह्यकारान्तं[2] रुद्रान्तं[3] व्योमवर्गकम्[4] ॥ १९ ॥

---

ङकारादिककारान्तं ङकारमारभ्य ककारावसानवर्णपञ्चकं संहारमार्गे चतुर्थं चतुर्थवर्गं मारुतं मरुत्सम्बन्धिवर्गमिति विदुः जानन्ति । तद्विज्ञाः इति शेषः । अःकारादि ह्यकारान्तं अःकारमारभ्य अकारान्तषोडशस्वरवर्णजातं, रुद्रान्तं लयावसानकम् व्योमवर्गकं आकाशवर्गमिति च विदुः तद्विज्ञाः जानन्ति । अयं च संहारमार्गे पञ्चमवर्गो भवति । एवं च संहारमार्गे पृथ्वी-अप्-तेजो-मरुद्-वियदभिधानाः पञ्चवर्गाः कथिताः ॥१९॥

---

(1) ङकारादिचैकारान्त दशार्णं मारुतं विदुः- ख.
ङकाराद्यौककारान्तम् दशार्णं मा_तम् विदुः- झ.
तकारादिककारान्तम् पञ्चकम् मारुतम् विदुः- प.
ङकारादिककारान्तपञ्चकम् मारुतम् विदुः- क. ख. (पा) घ. छ. ट. ठ. ड. ढ. त. थ. द. प.
ङकारादिककारान्तं पञ्चमम् मारुतम् विदुः- ज.

(2) आःकारादि अकारान्तम्- छ. त. द.
एकारादि ह्यकारान्तम्- ख. झ.
अःकारादि अकारान्तम्- क. ग. घ. च. ज. ट. ड. ड ढ. थ. ध.

(3) रुद्रार्णं- ख. झ.
पञ्चमम्- ध.

(4) वर्णकम्- ग. प.

एते वै पञ्चवर्गाश्च संहारे तु प्रकीर्तिताः[2] ।

[ संहारमार्गेण मन्त्रोद्धारः ]

समस्तान् रुद्रमंत्रांश्च[3] संहारेण समुद्धरेत् ॥ २० ॥

[ वर्गत्रयनिरूपणनिगमनम् ]

एवं त्रिवर्गभेदास्ते कीर्तिताश्च[4] समासतः ।

---

एते वै पञ्चवर्गाश्च पूर्वोक्ताः पृथिव्यप्तेजोमरुद्व्योमाभिधानाः पञ्चवर्गाः संहारे तु संहारमार्गे एव प्रकीर्तिताः कथिताः । समस्तान् सर्वान् रुद्रमन्त्रांश्च रुद्रदेवताकान् मन्त्रान् संहारेण संहारमार्गेण समुद्धरेत् सम्यगुद्धरेत् ॥२०॥

एवं उक्तप्रकारेण, ते त्रिवर्गभेदाः पूर्वोक्ताः सृष्टिस्थितिसंहाराभिधानाः वर्गत्रयभेदाः समासतः संक्षेपेण कीर्तिताः कथिताः । हे षण्मुख ! एवं अकारादिक्षकारांतवर्गाणां वर्गभेदः सृष्ट्यादिक्रमेण वर्गतदवान्तरभेद.

---

(1) वर्गश्च– ङ.
वर्गास्ते– ख. झ.

(2) संहारे चेति कीर्तिताः– क ङ. थ. प.
संहारश्चेति कीर्तिताः– छ. ट. ठ. त. भ.
संहाराश्चेति कीर्तिताः– ख. (पा) ग. घ. ज ढ द.

(3) रुद्रमन्त्राणि सर्वाणि– क ख. (पा) ग घ च. छ. ज. ट. ठ. ड. ढ. त थ. द प.
रुद्रमन्त्रांश्च– भ.
रौद्रमन्त्राणि सर्वाणि– फ.

(4) भेदानि कीर्तितानि– क. ख. (पा) ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. फ.
भेदास्ते कीर्तितास्ते– ध.

[ चक्रकर्णिकालिखितवर्णपर्यायाः ]

वर्गभेदो मया प्रोक्तः[1] वर्ण[2]नामान्यथ शृणु ॥ २१ ॥

[3]चक्रे तु कर्णिकादीनि[4] वर्णानि च[5] यथाक्रमम्[6] ।
वक्ष्ये नामानि संक्षेपात् शृणु तत्त्वं शिवादिकम्[7] ॥ २२ ॥

---

मया ईश्वरेण प्रोक्तः कथितः । अथ अनन्तरम्, मया वक्ष्यमाणानि वर्णनामानि सूक्ष्मकर्णिकादिलिखिताक्षराणां पर्यायनामानि शृणु अवधारय ॥२१॥

हे षण्मुख ! चक्रे तु कर्णिकादीनि वर्णानि नामानि च चक्रस्य कर्णिकागतबीजप्रमुखवर्णानि तेषां अभिधानानि च यथाक्रमं क्रमशः संक्षेपात् संग्रहेण वक्ष्ये कथयामि । शिवादिकं तत्त्वं शिवार्णप्रमुखवर्णतत्त्वम्, शृणु अवधारय ॥२२॥

---

(1) नामभेद इदं प्रोक्त- फ
वर्गभेदं अथ प्रोक्तः- ख. झ.
वर्गभेद इमं प्राहुः-ष.
वर्गभेद इदं प्रोक्त- क. ग. घ. च छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ.
(2) वर्ग- ढ.
(3) पद्यार्धमिदं ड प. पुस्तकयोः न दृश्यते ।
(4) कर्णिकादीनां- ष.
(5) वर्णानीह- ख झ .
(6) क्रमात्- क ग. च. छ. ज. ट ठ. ढ. त. थ द. ध.
(7) शिवाधिकम्- ग. च. झ.

[ शिवबीजाक्षरस्य हकारस्य पर्यायाः ]

नादं(दो) गुह्यं[1] परं जीवं(वः) देही[2] भूतं च पञ्चमम् ।
सान्तं[3] तत्त्वान्त[4]भूतान्तं[5] शिवार्णं शून्यमव्ययम्[6] ॥ २३ ॥
पर्यायनामान्येतानि हकारस्य स्मृतानि च[7] ।

---

अथ कर्णिकामध्यस्थशिवबीजस्य महिमाऽभिधानानि- नादः, गुह्यम्, परम्, जीवः, देही, भूतम्, पञ्चमम्, सान्तम्, तत्त्वांतम्, भूतांतम्, शिवार्णम्, शून्यम्, अव्ययम् इति ॥२३॥

एतानि इमानि नादाद्यव्ययान्तानि त्रयोदश पर्यायनामानि पर्यायाभिधानानि, हकारस्य शिवबीजात्मकहवर्णस्य स्मृतानि च स्मर्यन्ते च। एतेषां त्रयोदशनाम्नाम् निरुक्तिः उच्यते- हकारस्य सूक्ष्मत्वात् घोषरूपवत्त्वाच्च नादाभिधानं भवति ।

---

(1) गुण्यं- ढ.

(2) देहि- क ख.
देह- प.

(3) शान्तम्- क. ढ. थ. द.

(4) तत्त्वान्तम्- झ.

(5) भूतानि- फ

(6) शिवार्णाशून्यमव्ययम्- ग. च. ज.
सर्वशून्यमनामयम्- फ.

(7) एते पर्यायनामानि हकारस्य विधीयते- ग. च. झ.

[ तत्र नादपदार्थः ]

सूक्ष्मत्वात्[1] घोषरूपत्वात्[2] नादमि(इ)त्यभिधीयते ॥ २४ ॥

[ गुह्य-परपदार्थौ ]

चराचरादिभूतेषु जीवरूपं[3] हृदि स्थितम् ।

---

तदुक्तं वातुलकालज्ञाने–

" शुद्धप्रासादरूपकुण्डलिनी शक्तिः त्रिभेदा भवतीत्युक्तेति कथ्यते–

स्थूलं शब्द इति प्रोक्तं
सूक्ष्मं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु
तत् परं परिकीर्तितम् ॥

स्थूलमिति उच्चारणयोग्यः शब्दः । स एव स्थूलम् । सूक्ष्मं चिन्तामयं भवेत् । चिन्तितुं योग्यं भवति । चिन्तया रहितं यत् शुद्धप्रासादबीजमस्ति, तत्तु शून्यवर्णं परं परिकीर्तितम् । तस्मात् सूक्ष्मत्वात् चिन्तामयत्वात् घोषरूपत्वात् समस्ततत्त्वोपरिघोषणरूपत्वात् नादः इति अभिधीयते कथ्यते ॥२४॥

यस्मात् चराचरादिभूतेषु स्थावरजङ्गमादिषु हृदि हृदयस्थाने जीवरूपं जीवरूपेण स्थितम्, वर्तते, तस्मात् इदं हकाराख्यं शिवबीजम्,

---

(1) सूक्ष्मतत्त्वात् - छ.
(2) घोर- अ.
दोष- च.
द्वेष- ट. ढ. ह
(3) रूपो- फ.

तस्मात् गुह्यमिदं[1] प्रोक्तं परं भावात्परं स्थितम्[2] ॥ २५ ॥

[ जीवदेहिपदार्थौ ]

जीवः[3] शिवः[4] इति ज्ञेयः[5] तस्मात् जीव इति स्मृतः[6] ।

---

समस्तजगद्भ्रामकाभावात् हृदयगतजीवरूपनादब्रह्म कैश्चिदपि ज्ञातु मशक्यत्वात् गुह्यमित्यभिधीयते । तथा **परंभावात्** जीवरूपत्वेऽपि सर्वोत्कर्षेण वर्तनात् **परं स्थितं** जन्मस्थितिलययुक्तजीवात्मनामपि परत्वात् परं वर्तते ।।२५।।

**जीव इति** । पशूनात्मनां मलादिपाशवशात् आवृत्त(त)दृक्क्रियाणां तनुकरणादिभिः स्वयमेव संयोगस्य अशक्यत्वात् शिव एव तेषां जीवत्वेन

---

(1) मिति- च.

(2) परतत्त्वात् परं स्मृतम्- फ.

इतःपरं- ग च. छ. ज. ट. ड. ढ. द. त. थ. ध. प. पुस्तकेषु-

''स्थूलं शब्द इति प्रोक्तं
सूक्ष्मं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु
तत्परं परिकीर्तितम् ॥

इति पद्यं दृश्यते । तथापि व्याख्याने " सूक्ष्मत्वात्- अभिधीयते ॥ २४ ॥ इत्यस्य भागस्य व्याख्यानावसरे ' तदुक्तं वातुलकालज्ञाने इत्याद्युक्त्वा अस्य पद्यस्य उद्धृतत्वात् अस्माभिः मूलपाठे न संयोजितम् ।

(3) जीवं- क. शिवो- ग. च. ज. थ.

(4) जीवः- ग. च. ज. थ. शिवं- ठ. द. ध. जीवम्- फ.

(5) ज्ञेयम्- छ. ध. उक्तम्- फ.

(6) जीवमिति स्मृतम्- ध. छ. ढ.

जीवोच्यते क्रमात्- फ.

शिवाद्यवनिपर्यन्तं देही देहत्वतः स्मृतः ॥ २६ ॥

[ देहत्वाद्देहि चोच्यते (?) ]

---

प्रेरकत्वात् जीवः इत्युच्यते इति ज्ञेयः । तस्मात् शिवबीजरूपहकारः जीव इति जीवात्मेति स्मृतः स्मर्यते । शिवाद्यवनिपर्यन्तं शिवादिपृथिव्यन्ततत्त्वानाम् देहत्वतः प्रासादरूपिणः शिवस्य देहत्वात् हकारस्यापि शिवबीजत्वात् हकारः देही स्मृतः देही इत्यप्युच्यते ।

तदुक्तं पौष्करे–

अचेतनं जगद्विप्राः ! चेतनप्रेरकं विना ।
प्रवृत्तौ वा निवृत्तौ वा न स्वतन्त्रं रथादिवत् ॥

इति ॥

कालज्ञानेऽपि–

" ब्रह्मा विष्णुश्च रुद्रश्च इन्द्रश्चन्द्रो बृहस्पतिः ।
प्रजापतिस्तथाऽऽदित्यः शुक्रः स्कन्दो बुधस्तथा ॥
ये चान्ये प्राणिनो देवाः सर्वे प्रोक्ताः प्रसादजाः ॥ "

इति ॥ अन्यत्रापि–

" परमशिवसमुद्रेऽहं हरिः सर्वदेवाः
मनुजपशुमृगाद्याः शीकरा एव सत्यम् ।
विमलमतिभिरेवं वेदवेदान्तनिष्ठैः
हृदयकुहरमध्ये वेदितुं शक्यते हि " ॥ इति ॥

[ भूतपञ्चमपदार्थौ ]

अकायत्वात् अजीवत्वात्[1] भूतं चेति प्रकीर्तितम्[2] ।
तत्त्वाद्येन[3] क्रमाद्व्योम, पञ्चतत्त्वाच्च पञ्चमम् ॥ २७ ॥

[ सान्ततत्त्वान्तपदार्थौ ]

सकारस्य परं तस्मात् सान्तं चेति[4] प्रकीर्तितम् ।

---

**अकायेति** हकारस्य पूर्वश्लोके जीवत्वमुक्तमपि तस्य चैतन्याभावात् अजीवत्वमेवेति **अजीवत्वात्**, सकायत्वमुक्तमपि तस्य कायाभावात् अकायत्वमेवेति **अकायत्वात्**, सदसद्वस्तुष्वयोगाच्च तत् शुद्धं वस्तु **भूतं चेति** भूतमिति च **प्रकीर्तितम्** । अत एव **तत्त्वाद्येन क्रमात्** तत्त्वक्रमेण सम्भूततत्त्वानां प्रथमत्वात् इदं **व्योम** इत्युच्यते । **पञ्चतत्त्वाच्च** सादाख्यस्य पञ्चविधानत्वात् तस्य बीजत्वात् हकारोऽपि **पञ्चमं** पञ्चविधानं स्यात् ॥२७॥

(हकाराख्यशिवबीजम्) यस्मात् सृष्टिमार्गतः **सकारस्य** शक्तिबीजसकारस्य **परं** अन्ते वर्तते, **तस्मात् सान्तं चेति प्रकीर्तितम्** तत्

---

(1) आकाशत्वात् सजीवत्वात्- ख झ.
आकाशस्य त्वबीजत्वात्- फ.

(2) तत्त्वान्तं चेति कीर्तितम्- फ.

(3) तत्त्वादयनु- ग. च. ज. ड.
तत्त्वादयन्त- ध.

(4) शान्तं चेति- क.

तत्कालादि[1]शिवान्तत्वात्[2] तत्त्वान्तमिति कीर्तितम्[3] ॥ २८ ॥

[ भूतान्त-शिवार्णपदार्थौ ]

पृथिव्यादिक्रमाद्व्योम भूतान्तमिति कीर्तितम्[4] ।
सर्वव्यापिप्रभावत्वात् शिवार्णमीति[5] कीर्तितम् ॥ २९ ॥

---

शिवबीजम्, कलादिशिवांतत्वात् निवृत्तिकलाप्रमुखशिवतत्त्वाधिष्ठितशांत्य-तीतकलान्तपञ्चकलासु स्थितत्वात् सर्वतत्वलयस्थानत्वाच्च तत्त्वान्तमिति तत्त्वान्तनाम्ना कीर्तितं कथितं भवति ॥२८॥

पृथिव्यादिक्रमात् संहारयोग्यभूम्यादीनां क्रमात् व्योम आकाश-तत्त्वं सर्वलयस्थानं भवति । अत एव व्योमतत्वात्मकं शिवबीजम्, भूतान्त-मिति कीर्तितम् ल-व-र-य-हाभिधानपृथ्व्यादिबीजपरिगणनया हकारः व्योम-बीजमित्यतः भूतान्तमिति कथ्यते इति यावत् । सर्वव्यापिप्रभावत्वात् वर्णतत्त्वप्रमुखसमस्ततत्त्वेषु व्यापकत्वात् इदं बीजं शिवार्णमिति शिवार्णनाम्ना कीर्तितं कथितं भवति ॥२९॥

---

(1) कालाग्न्यादि- ग च. ज. झ.
कलादि च- क. ख. घ. छ. ट. ठ. ड. ढ. त. थ. द. प.

(2) शिवं तत्वात्- त.

(3) तत्त्वान्तः प्रकीर्तितम्- क

(4) पञ्चतत्त्वाच्च पञ्चमम्- झ.

(5) शैवार्णमिति- ट. थ.
जीवान्तमिति- फ
शिवार्ण चेति- ञ.

[ शून्याव्ययपदार्थौ ]

वाङ्मनोऽतीत[1]भावत्वात् शून्यं[2] चेति प्रकीर्तितम् ।
अक्षीणत्वान्महासेन ! [3]ह्यव्ययं चेति कीर्तितम् ॥ ३० ॥

[ उक्तार्थनिगमनम् ]

पर्यायनामान्येतानि[4]
हकारस्य स्मृतानि च[5] ।

---

**वाङ्मनोऽतीतभावत्वात्** वाङ्मनसोः प्रवृत्तिविरोधेन वक्तुं ध्यातुं च अयोग्यत्वात्, **शून्यं चेति** शून्यमित्येव **प्रकीर्तितं** अभिहितम् । हे **महासेन!** सुब्रह्मण्य! **अक्षीणत्वात्** शिवतत्त्वाक्षरं हकारः, समस्तजगदपि सृष्टिकाले स्वेन जातमपि स्वयं क्षीणो न भवति । संहारे स्वस्मिन् अस्य प्रपञ्चस्य लये जातेऽपि स्वस्य वृद्धिरपि न संभवति । स्थितिकाले समस्तप्रपञ्चस्य स्वस्मिन् वर्तमानत्वेऽपि स्वयं व्यापारशून्यो भवति । एवं क्षयवृद्धिव्यापाराभावेन सदा समत्वात् इदं शिवबीजं **अव्ययं चेति** अव्ययमिति च **कीर्तितम्** कथितम् ॥३०॥

**एतानि** पूर्वश्लोकनिरूपितनामधेयानि **हकारस्य पर्यायनामानि** पर्यायनामधेयानि इति **स्मृतानि च** स्मृतान्यपि भवन्ति । **कर्णिकासंस्थितं**

---

(1) भावनाहीन– फ

(2) शून्यः– थ.

(3) 'हि' इति नास्ति– क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. प. फ.

(4) एते पर्यायनामानि– क. ख. (पा). ग. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(5) हकारस्याभिधीयते– क. ख. (पा). ग. च. छ. ज. ट. ड. त. थ. द. प. फ.
हकारस्य विधीयते– घ. ठे. ढ.
अस्यार्धस्य स्थाने– "हकारस्यैव पर्यायनामानि च यथाक्रमम्" इति– ध.

कर्णिकासंस्थितं बीजं
इदं च परिकीर्तितम्[1] ॥ ३१ ॥

[ दलगताक्षराणां पर्यायाः, तत्र बिन्दोः सकारस्य पर्यायाः ]

[2]प्रवक्ष्ये केसराणां च
चतुष्पत्रेषु[3] वर्णकान् ।

---

सूक्ष्मकर्णिकास्थितम्, इदं बीजं हकाराख्यं शिवबीजम्, च परिकीर्तितं एतावता निरूपितम् ॥३१॥

केसराणां, सूक्ष्मकर्णिकायाः परितो वर्तमानानां केसराणां, चतुष्पत्रेषु चतुर्षु दलेषु वर्णकान् विद्यमानान् वर्णान् प्रवक्ष्ये

---

(1) कर्णिकाबीजमेवोक्त केसराणि तथोच्यते– क. ख. (पा) ग. घ. च. ठ. ड. ढ. प.

कर्णिकाबीजमत्रोक्तः केसराणां तथोच्यते– ख.

कर्णिकाबीजसंयुक्तं केसराणि तथोच्यते– फ.

(2) पद्यार्धमिदं– क. ख. छ. ज. ट. ठ. ड. ढ. त. थ द. ध. प. फ. पुस्तकेषु न दृश्यते ।

(3) चतुष्पत्रेषु– ख. ङ.

आधारशक्तिकार्याणि[1] परं[2] बिन्दुरनु[3]क्रमात्[4] ॥ ३२ ॥

[5]बिन्दोः पर्यायनामानि पञ्चैतानि स्मृतानि च[6] ।

---

वदिष्यामि । आधारशक्तिकार्याणि आधारः, शक्तिः, कार्यं इति, परं इति, बिन्दुः इति च अनुक्रमात् क्रमशः– ॥३२॥

बिन्दोः बिन्दुस्वरूपसकारस्य एतानि पञ्च पञ्चनामानि पर्यायनामानि पर्यायवाचकानि स्मृतानि स्मृतानि भवन्ति । पूर्वदले विद्यमानाक्षरं

---

(1) कार्यं च– क ख. (पा) ग. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. भ. प.
कार्यं तु– फ.

(2) पर– क ग. च. छ. ट. त थ. फ.
परो– ख. (पा)
परा– ध.

(3) विन्दुरिति– क ख (पा) ग. च. छ. ज. ठ. ड. ढ. त. थ. द. ध. फ.
बिन्दुमिति– घ. ट.

(4) स्मृतः– क. ख. (पा) घ. ट. ठ ढ. त. थ. द.
स्मृतम् - ग च. छ. ज. ड. ध. प. फ.

(5) एते वै पञ्च नामानि बिन्दुपर्य्यायवाचका- क. ख (पा) ग च. छ. ज ट. ठ. ड. ढ. त. ध प.
एते वै पञ्चनामानि बिन्दोः पर्य्यायवाचकः– फ.
एते वै पञ्चनामानि बिन्दुपर्य्यायवाचकः– य.

(6) समासतः– भ.

[ आत्मबीजरूप-अकारपर्यायाः ]

अकार[1] आत्मबीजं च[2] देहि[3]क्षेत्रज्ञ[4]भोगिनः[5] ॥ ३३ ॥
एतानि[6] च पञ्च नामानि अ(ळ)कारस्यो[7]दितानि च[8] ।

---

उक्त्वा दक्षिणदलस्थितं अक्षरं उच्यते । अकारः, आत्मबीजम् , देही, क्षेत्रज्ञः, भोगी, इति ॥३३॥

एतानि पञ्चनामानि इमानि पञ्चपर्यायनामानि अकारस्य आत्मबीजरूपाकारस्य उदितानि च उक्तानि भवन्ति । दक्षिणदलोक्त्य-

---

(1) ळकारं- ख. ग. च. झ. घ.

आकारं- थ.

(2) अग्निबीजं च- फ.

(3) देहि- थ. ध.

(4) क्षेत्रं च- ट. फ.

(5) भोगिनम्- फ

(6) एते वै- क. ग. च. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. फ.

(7) ळकारस्यौ- ख. ग. च. झ. ध.

(8) स्वाभिधीयते- क. ग. च. छ. ज. ट. त. थ. द. भ. प.

स्य विधीयते- घ. ड. ढ फ.

[ नादरूपस्य ऐकारस्य पर्यायाः ]

ऐकारश्च शिवाधेयं परं नादात्ममेव च[1] ॥ ३४ ॥
नादपर्यायनामानि पञ्चैतानि स्मृतानि च[2] ।

[ विद्याबीजक्षकारपर्यायाः ]

विद्याबीजं क्षकारं च [रश्च][3] कूटं[4] वर्णं[5] तथैव च ॥ ३५ ॥

नन्तरं पश्चिमदलगतं बीजं उच्यते– ऐकारश्च शिवाधेयं शिवः आधेयश्च, परं नादात्ममेव च नादश्च– ॥३४॥

एतानि पञ्च इमानि पञ्चनामधेयानि नादपर्यायनामानि सूक्ष्मनादाभिधानैकारस्य पर्यायवाचकानि इति स्मृतानि च भवन्ति । पश्चिमदलोक्त्यनन्तरं उत्तरदलगतबीजमुच्यते-- विद्याबीजं, क्षकारश्च, तथैव कूटवर्णं च– ॥३५।

---

(1) आधेयं च शिव चैव कारणं परनामकम्– ख. झ.
एकारश्च शिवाधेयं परं नादान्तमेव च– ग. च. ज.
एकारं च शिवाधेयं परं नादान्तमेव च– ख. (पा) छ. ड. थ.
ऐकारं च शिवाधेयः परं नादान्तमेव च– ट. ठ. ढ. त. द. ध.
कारणं च शिवो ध्येये परं नादान्तमेव च– घ.
एकारं च शिवाधेयपरं नादात्ममेव च– प.
कारणं च शिवाधेयं परम् नादं तथैव च– फ.

(2) एते वै पञ्चनामानि नादपर्यायवाचकाः– क. ख. (पा) ग. च. छ. ज. ट. ठ ड. ढ. त. थ. द. ७. प.
एते वै पञ्च नामानि नादे पर्यायवाचकः– फ.
नादपर्यायनामानि पञ्चैतानि विदुः क्रमात्– ध.

(3) त्वकार च – छ.

(4) कूटं– ग च ज.

(5) वर्णान्– झ.

वर्गान्तं द्राव मित्युक्त(त्येवं)[1] क्षकारस्य तु पञ्च वैः ।
[ एवं चतुर्णां कर्णिकावर्णत्वम् ]
बिन्द्वादिवेदबीजानि[3] कर्णिकार्णा इति स्मृताः[4] ॥ ३६ ॥

वर्गान्तं, द्रावम्, इत्येवं इत्युक्तरीत्या, क्षकारस्य तु क्षवर्णस्य तु पञ्च वै पञ्च पर्यायनामानि भवन्ति । बिन्द्वादिवेदबीजानि सकारादीनि क्षकारान्तानि चत्वारि बीजानि कर्णिकार्णाः इति कर्णिकावर्णाः इति स्मृताः ॥३६॥

---

(1) वर्गान्तद्रावमित्येवं – प.
वर्गान्तं च पञ्चैते– ख. क्ष.
वर्गान्त च पञ्चैते– ज.
वर्गान्त पञ्चान्त – ङ. प.
वर्गान्तं चैव पञ्चैते– ग. च. फ.

(2) स्य प्रकीर्तिताः– ख. क्ष.
स्याभिधीयते– क. ख. (पा). ग. घ. च. छ. ज. ट. ठ. ठ. ड. ढ.
त. ध द. प.
स्य विधीयते– फ.

(3) बिन्दुरादि चतुर्थानि– क. ख. (पा). ग. च छ. ज. ट ड. ड. ढ.
त. थ. द प.
बिन्दुरादिचतुर्णाम्नि– फ.
बिन्दुरादीनि चत्वारि– ध.

(4) कर्णिकाबीजमिष्यते– क. ख. (पा). ग. च छ. ज. ट. ठ. ड. ढ.
त. थ. द. प.
कामबीजमिहोच्यते– फ.
केसराणां विदुः क्रमात्– ध.

[ प्रथमावरणे अष्टदलस्थाः वर्णाः , तत्र स-षकारौ ]

सकारः[1] शक्तिबीजं[2] स्यात्[3] प्रथमः[4] शुक्लधातु[कः]कम्[5] ।
षकारो[6] द्वितयं[यो] भानुः रविर्मज्जा दिवाकरः[7] ॥ ३७ ॥

---

सकारः शक्तिबीजं स्यात् सवर्णः शक्तिदेवताकबीजं भवति । प्रथमः शिवमन्त्रोद्धारक्रमे प्रथमः इति तस्य नामधेयम् । शुक्लधातुकः शुक्लधातुकः इति तस्य पर्यायनाम । षकारः द्वादशादित्यबीजं षवर्णः स्थितिमार्गेण शिवमन्त्रोद्धारसमये द्वितयः द्वितीयः इति संज्ञां लभते । अत्र द्वितीयः इति प्रयोक्तव्ये द्वितयः इति प्रयोगः छन्दोनुरोधेन । स एव षकारः भानुः रविः मज्जा दिवाकरः इति पर्यायनामानि लभते । अयं षकारः भानुः रविः दिवाकरः इति सर्वाणि सूर्यपर्यायनामानि लभते । अत्र मज्जा इति सप्तधात्वन्तर्गता मज्जा गृह्यते ॥३७॥

---

(1) सकारं- क. ग घ. च छ ज ट' ठ ड. त थ. द. ७ प.
(2) शुक्लबीजं-फ.
(3) ज च- ख. झ.
(4) प्रथम- क. ख. ग. घ. च. छ. ज. झ. ट. ठ ड. ढ. त थ. द. ध. फ.
(5) कीलमुच्यते- फ.
(6) षकारं- क. ग. च. छ ज. ट. ठ ड ढ. त. द. ध. प.
(7) भानुरविमज्जादिवाकराः- ख. ङ.
भानुरविमज्जादिवाकरम्- ग. च. ज. ढ. प.
षद्वितीयं च भानुर्वै रविर्मज्जा दिवाकरः- ध.

[श-वकारौ]

शकारं[1] श्री रमा लक्ष्मीः
अस्थि च त्रितयं विदुः ।
वकारो[2] वारुणो ह्यापः[3]
चतुर्थं मेद ईरितम्[4] ॥ ३८ ॥

---

शकारं शवर्णम्, श्रीः रमा लक्ष्मीः अस्थि अस्थिधातुः त्रितयं स्थितिमार्गेण शिवमन्त्रोद्धारक्रमे तृतीयं वर्णं चेति विदुः जानन्ति । अत्र तृतीयमिति वक्तव्ये त्रितयं इति छन्दोनुरोधेनोक्तम् । श्रियः यानि पर्यायनामानि तानि सर्वाण्यपि शकारस्य भवन्ति । वकारः ववर्णः वारुणः वरुणसम्बन्धी हि, आपः जलम्, चतुर्थं स्थितिमार्गेण शिवमन्त्रोद्धारक्रमे चतुर्थबीजम्, मेदः मेदोधातुरिति ईरितः अभिहितः । जलस्य यानि पर्यायनामानि संति तानि सर्वाण्यपि वकारस्य भवन्ति ॥३८॥

---

(1) शकारः– छ.

(2) वकारं– क ग च. छ. ज. ट. ठ. ड. ढ त. थ. द. ध.

(3) वारुणोऽप्यापः– झ.

वारुणं ह्यापः– क. ग. च. ज. ङ. थ. प.

वरुणं ह्यापः– ट. ठ. ढ. त. द. ध.

(4) मेदसि स्थितम्– ख. (पा). ग. च. छ. ज. थ.

मेधसि स्थितम्– क. ट ठ ड ढ त. ध. प

[ल-रकारौ]

लकारः[1] पञ्चमं[2] चैन्द्रं[3] मांसं च धरणी मही ।
रकारश्चा[4]नलं रक्तं षष्ठं क्रोधश्च[5] पावकः[6] ॥ ३९ ॥

यकारश्चानिलः[7] स्नायुः[8] सप्तमं मारुतस्तथा[9] ।

---

लकारः लवर्णः पञ्चमं स्थितिमार्गेण शिवमन्त्रोद्धारक्रमे पञ्चमबीजं, ऐन्द्रं च इन्द्रबीजं मांसं च मांसधातुश्च भवति । धरणी मही इत्यादीनि सर्वाण्यपि पृथिवीपर्यायनामानि लकारस्य भवन्ति । रकारः रेफः आनलं अग्निबीजम्, रक्तं रक्तधातुः, षष्ठं स्थितिमार्गेण शिवमन्त्रोद्धारक्रमे षष्ठ-बीजम्, क्रोधः क्रोधनामकः पावकः पावकनामकश्च भवति । अग्नेः यानि पर्यायनामानि तानि सर्वाण्यपि रेफस्य भवन्ति ॥ ३९ ॥

यकारः यवर्णः आनिलः अनिलसम्बन्धी वर्णः स्नायुः स्नायुधातुः सप्तमे शिवमन्त्रोद्धारक्रमे सप्तमं बीजम्, तथा तथैव मारुतः मारुतपर्याय-

---

(1) लकारं-- क. ग. च. छ. ज. ट. ठ. ड. ढ त. थ. द. ध. प.
(2) पञ्चमे- प.
(3) चेन्द्रं- क. ग. च. ज
चन्द्रं- प.
(4) रकारं चा- क. ग. घ च. छ. ज ट. ठ. ड. ढ. त. थ. द. ध. प.
(5) क्रोधं च- ट. थ.
(6) पावकम्- ठ.
(7) यकारं चानिलं- क. ग. घ. च. छ ज ट ठ. ड. ढ. त. द.
(8) स्नायु- ग. च. ध.
वायुः- त.
(9) मारुतं तथा- ग. घ. च. . ज. ड. ढ
मारुतस्ततः- ख. झ.

मकारः कालमृत्युश्च[1] चाष्टमं[2] मृत्युकारकम्[कः][3] ॥ ४० ॥

एतानि चाष्टवर्गस्य
नामान्येत्रं स्मृतानि च[4] ।

---

नामकश्च भवति । मारुतस्य यानि पर्यायनामानि तानि सर्वाणि यकारस्य भवन्ति । मकारः म वर्णः कालमृत्युश्च कालमृत्युबीजम्, अष्टमं शिवमन्त्रोद्धारक्रमे अष्टमं बीजम् । मृत्युकारकः मृत्युकारकनामधेयश्च भवति । मृत्योः यानि पर्यायनामानि तानि सर्वाणि मकारस्य भवन्ति ॥४०॥

एवं एवंक्रमेण अष्टवर्गस्य च अष्टदलवर्गस्य च प्रथमावरणगत-प्रथमवर्गस्य अष्टाक्षराणाम्, एतानि नामानि पूर्वोक्तपर्यायनामानि इति

---

(1) वैं- ध.

(2) अष्टमं- ख. ञ.

(3) मूर्तिकारकम्- प.

मृत्युकारणम्- ध.

(4) एते प्रथमवर्गस्य त्वेतन्नाम प्रकीर्तिताः- ग. च. ञ.

एते प्रथमवर्गस्य त्वेवं नाम प्रकीर्तिताः- क. घ. छ. ट. ड. ढ. त. थ. द. प.

एते प्रथमवर्गस्य त्वेवं नाम प्रकीर्तितम्- ट. ध

[ मध्यमावरणे षोडशदलस्थाः वर्णाः, तत्र प्रथमः अकारः ]

द्वितीयं तु[1] कला ज्ञेयं[2]
तत्कलाद्यक्षरं शृणु ॥ ४१ ॥

आदिबीजं च वर्णादिः[3] वर्गादिश्च[4] कलादि च ।
स्वरादिश्चैव मात्रादिः आदिप्रकृतिरेव च ॥ ४२ ॥

---

स्मृतानि । द्वितीयं तु षोडशदलयुक्तमध्यमावरणं कला कलेति षोडशस्वराक्षरयुक्तमिति ज्ञेयम् । तत् कलाद्यक्षरं तस्मिन् मध्यमवृत्ते स्थितानां षोडशकलानां प्रथमबीजाक्षरं शृणु अवधारय ॥४१॥

अकारस्य बीजानां प्रथमत्वात् आदिबीजमिति, पञ्चाशद्वर्णानां प्रथमत्वात् वर्णादिरिति, वर्गस्य सृष्टिवर्गस्य आदित्वात् वर्गादिरिति, कलाक्षरभूतषोडशाक्षराणामादित्वात् कलादिरिति, स्वरादिरिति मात्रादिरिति आदिप्रकृतिरिति- ॥४२॥

---

(1) द्वितीयस्तु- ख. झ.

(2) ज्ञेयः- ख. झ.

(3) आदिवर्णादिबीजं च- ख. ज

(4) वगर्गादि च- ग. च.

जीवा[दि]श्च कला मात्रा चादि[1]श्चैव स्वरस्तथा[2] ।
एतत्प[3]र्यायनामानि अ[ह्य]कारस्य स्मृतानि वै[4] ॥ ४३ ॥

[ आकारादयः अवशिष्टाः स्वराः ]

[5]आकारादीनि शेषाणि कलाश्चेति प्रकीर्तिताः ।

[ तृतीयावरणे वर्णाः ]

तृती[या]यं वरणे व(र्णात्)र्णा विकलाश्च प्रकीर्तिताः ।४४॥

---

जीवादिरिति, कलेति, मात्रेति, आदिरिति स्वर इति च पर्यायनामानि विद्यन्ते ॥४३॥

अवशिष्टाः आकारादयः स्वरवर्णाः कलेति प्रकीर्त्यन्ते । एते च वर्णाः द्वितीयावरणदलेषु विन्यसनीयाः । विकलाख्याः ककारादयो वर्णाः तृतीयावरणदलेषु विन्यसनीयाः ॥४४॥

---

(1) आदि- झ.

(2) स्वरास्तथा- घ छ. थ.

(3) एते प- क. ख. ग. घ. च छ. ज. झ. ट. ठ. ड. ढ. त थ. द.
प. फ.

(4) ह्यकारस्य विधीयते- झ.
ज्ञात्वा मन्त्रान् समुध्दरेत्- क. ख. (पा) घ. च. छ ज. ट. ठ
ड. ढ. त. थ. द ध. प.

(5) 'अकारादीनि' इत्यारभ्य 'समुध्दरेत्' इत्यन्तो भागः- क. घ छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प पुस्तकेषु न दृश्यते ।

[ पटलार्थनिगमनम् ]

वर्णानां चैव वर्गाणां एवमेव प्रकीर्तितम् ।
एवं हि वर्गवर्णानि[1] ज्ञात्वा मन्त्रान् समुध्दरेत् ॥ ४५ ॥

वर्गभेदो मया प्रोक्तः[2] मन्त्रभेदमथ[3] शृणु ॥ ४६ ॥

इति श्रीवातुलतन्त्रे शुध्दाख्ये सहस्रग्रन्थसंहितायां
वर्गभेदो नाम
चतुर्थः पटलः

---

व्यापकादिभेदेन वर्गीकृतानां अकारादिक्षकारान्तवर्णानां पूर्वोक्तरीत्यैव आवरणदलेषु विन्यसनं कुर्यात् । ग्रन्थविस्तरभयात् अत्र नुक्तानां आकारादिबीजानां समस्तमन्त्रशास्त्रस्थितानि पर्यायनामानि ज्ञात्वा शिवमन्त्रादिमन्त्रान् समुद्धरेत् ॥४५॥

हे षण्मुख ! एतावत्पर्यन्तं मया वर्गभेदः प्रोक्तः कथितः । अथ एवं वर्गभेदनिरूपणानन्तरं मन्त्रभेदं शृणु अवधारय ॥४१॥

इति श्रीवातुलशुद्धाख्यतन्त्रसहस्रग्रन्थसंहिताव्याख्यायां
वर्गभेदो नाम चतुर्थः पटलः

---

(1) स्वरपर्यायनामानि- ख
(2) वर्गभेदमथ प्रोक्तः- ग.
वर्गभेदमिद प्रोक्त- क ग. घ. च छ. ज. ट ठ. ड. ढ. त. थ. द. प.
वर्गमिति प्रोक्तम्- ध.
(3) मतः- घ.

# अथ मन्त्रभेदपटलः पञ्चमः

[ मन्त्रस्वरूपध्यानरूपं मङ्गलम् ]

[1]यो[2] मन्त्रोऽन्तर[3]दिव्ययोगनिरतैः भाव्यस्सतां(दा)[4] हृत्स्थले
ताराग्रे शिवलिङ्गमूर्ध्नि विलस[5]च्चक्रान्तराले स्थितः ।

---

शिवशक्तिस्वरूपार्थशुद्धप्रासादपूर्वकाः ।
स्थित्यादिमार्गतः सिद्धाः शिवसादमहेश्वराः ॥

मन्त्राः सर्वे शिवात्मानः तज्ज्ञैरेवार्चितः शिवः ।
मुक्तिं ददाति भक्तेभ्यः स शिवो नः सदा मुदे ॥

यो मन्त्र इति । शिवस्य शुद्धप्रासादाख्यो मन्त्रः अन्तरदिव्ययोगनिरतैः अन्तर्भागे लोकोत्तरशिवयोगतत्परैः हृत्स्थले हृदयकमले

---

(1) इत आरभ्य "शिवः सन्निहितो भवेत्" इत्यन्तो भागः क-पुस्तके लुप्तः ।

(2) ये- थ.

(3) मन्त्रान्तर- ग. च.
मन्त्रोत्तर- ढ. थ.

(4) भावस्य तां- ग. च.
भाव्यस्य तां- द.
भात्यस्य तां- छ.

(5) मर्धनि लस- क. ढ द.

सर्वैरात्मभिराननेषु[1] सततं जप्यः[2] स्वशक्त्या[3] यु[तं]ते[4]
मन्ये तं विपरीतजप्य[5]मनघं मन्त्रं महासिद्धिदम् ॥ १ ॥

---

सदा सर्वदा भाव्यः भावनीयः । ध्यातव्यः इत्यर्थः । यः शिवस्य शब्दप्रासादमन्त्रः ताराग्रे तारमन्त्रस्य प्रणवस्य अग्रभागे शिवलिङ्गमूर्ध्नि शिवलिङ्गस्य शिरसि विलसच्चक्रान्तराले प्रकाशमानशिवचक्रस्य सूक्ष्मकर्णिकायां च स्थितः वर्तमानः यः शिवस्य शुद्धप्रासादमन्त्रः सर्वैः आत्मभिः समस्तशिवयोगिभिः आननेषु मुखेषु सततं अनारतम्, स्वशक्त्या युतं स्वस्वशक्त्यनुगुणं यथातथा जप्यः जपनीयः। विपरीतजप्यं विपरीतजपयोग्यम्, अनघं निर्दुष्टम्, महासिद्धिदं अमोघफलप्रदायकम् तं मन्त्रम् तादृशं शिवस्य शुद्धप्रासादमन्त्रम् मन्ये चिन्तयामि । ध्यायामीति यावत् ॥१॥

---

(1) त्सविकामनेषु- ध

(2) जप्यं- ग च.

जप्य- त

जल्पं- थ

(3) जप्यस्य शक्त्या- घ. छ.

(4) युतः- क. घ. छे. ट. ठ. ढ त थ. द.

यतो- भ

(5) मप्य- क घ. ढ.

[ पटलारम्भप्रतिज्ञा ]

अथातः संप्रवक्ष्यामि मन्त्रभेदविधिं परम् ।
भुक्तिदं मुक्तिदं चैव सर्वकामार्थसिद्धिदम् ॥ २ ॥

[ मन्त्राणां स्वरूपम्, उद्गमश्च ]

मन्त्रस्तु[1] देवतारू[पः]पं मन्त्ररूपमिदं जगत् ।
परार्धकोटिमन्त्राश्च शिववक्त्राद्विनिर्गताः[2] ॥ ३ ॥

---

अथ अनन्तरम्, अतः वर्गभेदनिरूपणस्य मन्त्रभेदनिरूपणोपयोगित्वात् परं उत्कृष्टम् भुक्तिदं भुक्तिप्रदम् इह मन्त्रजपिनां भुक्तिप्रदायकम्, मुक्तिदं मुक्तिप्रदम्, अमुत्र मुक्तिप्रदायकम्, सर्वकामार्थसिद्धिदं उक्तविधानेन साधकानां समस्ताभिवाञ्छितफलसिद्धिप्रदम्, मन्त्रभेदविधिं मन्त्राणां भेदविधानम् (मन्त्रो द्विरूपः भुक्तिमुक्तिप्रभेदेन) सम्प्रवक्ष्यामि सम्यक् वदामि ॥२॥

मन्त्रः देवतारूपः, इदं जगच्च मन्त्ररूपं भवति । त एव मन्त्राः संख्यया परार्धकोटयः सन्ति । ते च नादब्रह्मरूपिणः शिवस्य वक्त्रात् विनिर्गताः ॥३॥

---

(1) मन्त्र तु- क ग. घ. च. ज ट ठ ड. ढ त थ. द. ष.

(2) शिवमन्त्राद्विनिर्गताः - छ

शिववक्त्राद्विनिर्गताः- ड.

[ मन्त्राणामुपयोगः व्याप्तिश्च ]

कर्षणादिक्रियाः सर्वाः[1] मन्त्रेणैव प्रकीर्तिताः ।
तस्मान्मन्त्रः क्रियार्थः स्यात्[2] विना मन्त्रं क्रिया न च । ४ ॥

[3]मन्त्रेण देवता स्थाप्या[4] मन्त्रेण यजनादयः ।
स्नानं मन्त्रेण कर्तव्यं मन्त्रेणाहुतितर्पणे[5] । ५ ॥

---

सर्वाः क्रियाः कर्षणाद्याः आदिशब्देन प्रतिष्ठाऽर्चनादिनित्य नैमित्तिक-काम्य-प्रायश्चित्तादयः सर्वाः गृह्यन्ते । ताः सर्वाः मन्त्रेणैव मनुनैव साधयितुमिष्टाः । तस्मात् मन्त्रव्यतिरेकेण क्रिया नास्ति ॥४॥

मन्त्रेणैव मनुनैव देवतास्थापन-पूजन-स्नान होम तर्पणानि कर्तव्यानि ॥५॥

(1) सर्व- ढ

(2) तस्मान्मन्त्रक्रियार्थत्वात्- ख. क्ष.
तस्मान्मन्त्रं क्रियार्थत्वात्- ग. च. ज.

(3) 'मन्त्रेण देवता' इत्यारभ्य 'सालोक्यादि पदं तथा' इत्यन्तो भागः- ड प पुस्तकयोः न दृश्यते ।

(4) स्थाप्यं- क.

(5) मन्त्रेणाहुततर्पणम्- क. घ ङ. ट ठ. ढ. त. थ. द. ध.

प्रायश्चित्तं तु मन्त्रेण दीक्षा मन्त्रेण चैव हि ।
अणिमादीनि मन्त्रेण सालोक्यादिपदं[1] तथा[2] ॥ ६ ॥

मन्त्रेण पातकादीनि मुच्यन्ते[3] सर्वजन्मिनाम्[4] ।
सर्वमन्त्रक्रियाश्चैव[5] मन्त्रं शृणु षडानन ! ॥ ७ ॥

---

मन्त्रेण मनुना प्रायश्चित्तं तु नित्यनैमित्तिक-काम्य-प्रायश्चित्त कर्तव्यम् । मन्त्रेण चैव हि मनुनैव दीक्षा चाक्षुष्यादिभेददीक्षा च कर्तव्या । मन्त्रेण मनुनैव अणिमादीनि अणिमाप्रमुखाष्टमहासिद्धिश्च भवति । तथा मन्त्रेण मनुनैव सालोक्यादिपदं सालोक्य-सामीप्य-सारूप्य-सायुज्य-पदानि च भवन्ति ॥६॥

मन्त्रेण मनुनैव सर्वजन्मिनां समस्तजनानाम् पातकादीनि मनोवाक्कायकृतपातकादीनि । आदिशब्देन महापातकोपपातकानुपातकानि च ग्राह्याणि मुच्यन्ते नश्यन्ति । तस्मात् हे षडानन ! हे सुब्रह्मण्य ! सर्वमन्त्रक्रियाश्चैव समस्तैः मन्त्रैः साध्यमानाः क्रियाः मन्त्रं च शृणु ॥७॥

---

(1) परं– थ.
(2) ततः– ग. च. ज.
(3) मुच्यते– क.
मुच्यते– छ. ह. त. ध.
(4) जन्मनाम्– क. ट. ड. त.
जन्तूनाम्– द.
(5) क्रियाङ्गत्वात्– ख. झ.

[ मन्त्रपदार्थः ]

मननं सर्वपक्षेषु[1] त्राणं संसारसागरात् ।
मननत्राणधर्मित्वात्[2] मन्त्र[3] इत्यभिधीयते[4] ॥ ८ ॥

[ मन्त्रमहिमा ]

यथाऽऽदरः[5] स्वनाम्ना तु जनः संनिहितो[6] भवेत्[7] ।
तथा मन्त्रप्रयोगेण तत्र संनिहितः शिवः[8] ॥ ९ ॥

---

मन्त्रशब्दं निर्वक्ति मननमिति । सर्वपक्षेषु मननं अवबोधः शिव-ज्ञानप्रदः इत्यर्थः । संसारसागरात् संसार एव समुद्रः, तस्मात् त्राणं रक्षणम् । मननत्राणधर्मित्वात् बोधरक्षणधर्मित्वात् मन्त्रः इत्यभिधीयते मन्त्रः इति उच्यते । ८॥

यथा येन प्रकारेण लोके जनः देही स्वनाम्ना तु स्वस्याभिधाना-ह्वानेन आदरः अभिलाषवान् सन्निहितो भवेत् आह्वयन्तं पश्यति , तथा शिवोऽपि मन्त्रप्रयोगेण स्वस्याभिधानमन्त्रप्रयोगेण तत्र मन्त्रप्रयोक्तरि सन्नि-हितः सान्निध्यवान् भवति ।९।

---

(1) सर्वपक्षे तु- घ.
(2) धर्मत्वात्- क. ख. घ. च. छ. झ. ट ठ. ड. ढ. त थ. द. ध. प
(3) मन्त्र- क. ग. च. ज. ट. ढ. त. थ. द. ध प.
(4) " मननात् त्रायते इति मन्त्रः " इत्यपि मन्त्रशब्दः अन्यत्र निरुच्यते ॥
(5) आह्वानतः- ख. झ.
यथा परः- ज.
यथा नरः- ड.
(6) जनसंनिहितो- ग. च.
(7) यथा- ख. झ.
(8) शिवः सन्निहितो भवेत्- ख. झ

तस्मान्मन्त्रं महासेन ! रहस्यं न प्रकाशय[1] ।

[ मन्त्रोध्दाराङ्गमण्टपरचना ]

पूर्वोक्तदेशे[2] कृत्वा तु मण्टपं लक्षणान्वितम् ॥ १० ॥

गोमयेनानुलिप्याथ[3] मण्टपं भूषयेत् ततः[4] ।

[ चक्ररचना ]

अस्त्रमन्त्रेण संप्रोक्ष्य[5] तन्मध्ये चक्रमालिखेत्[6] ॥ ११ ॥

---

हे महासेन ! तस्मात् रहस्यं यस्य कस्यापि वक्तुमयोग्यम्, मन्त्रं न प्रकाशय शिमभक्तिपराङ्मुखेषु न प्रकटीकुरु । पूर्वोक्तदेशे चक्रोद्धारण-पटलोक्तशुद्धप्रदेशे शास्त्रोक्तविधानेन लक्षणान्वितं मण्टपं कृत्वा तु ॥१०॥

अथ गोमयेनानुलिप्य गोमयलेपनं कृत्वा ततो मण्टपं भूषयेत् तस्योपरि वितानादिभिः मण्टपं अलंकुर्यात् । अस्त्रमन्त्रेण संप्रोक्ष्य तन्मण्टपं अस्त्रमन्त्रेण सम्यक् प्रोक्ष्य तन्मध्ये चक्रमालिखेत् ॥११॥

---

(1) रहस्यार्थैः प्रकाशितः- फ.
रहस्यं न प्रकाशयेत्- छ. ड ढ.

(2) विधिमार्गेण- फ.

(3) लेप्याथ- व. छ ठ. ड. ढ. द प.

(4) मण्टपं तु प्रपूजयेत् - फ.

(5) प्रोक्षयेदस्त्रमन्त्रेण- ख क्ष.

(6) ताटयेत्तु त्र्यस्त्रकम्- फ.

कर्णिकाः केसरांश्चैव[1] दलान्युपदलानि वै[2] ।
क्रमेणैव तु संलिख्य[3] चाधारादीन् प्रपूजयेत्[4] ॥ १२ ॥

[ बीजाक्षरनिर्देशः प्रसादमन्त्रोद्धारश्च ]

तन्मध्ये शिवबीजादिवर्णानि विन्यसेत् क्रमात्[5] ।
[6]बीजानामधिपांश्चैव गन्धपुष्पादिनाऽर्चयेत् ॥ १३ ॥

---

**कर्णिकाः** कर्णिकागतदलानि **केसरांश्चैव** तद्दलकर्णिकयोरन्तस्स्थ-शु भ्रस्वर्णवर्णाकृतींश्च **दलानि** च आवरणगतदलानि **उपदलानि** च तद-न्तरगतसूक्ष्मदलानि च **क्रमेणैव** तु **संलिख्य** आधारादीन् आधारशक्त्या-दिदेवताः **प्रपूजयेत्** ॥१२॥

**तन्मध्ये** तस्य चक्रस्य मध्यगतदलेषु **शिवबीजादिवर्णानि** हकारादि-वर्णानि **क्रमात्** पूर्वोक्तक्रमेण **विन्यसेत्** विलिखेत । ततः **बीजाना-मधिपांश्चैव** तत्तद्बीजाधिष्ठातृदेवताश्च **गन्धपुष्पादिना** गन्धादिपूजाद्रव्यैः **अर्चयेत्** पूजयेत् ॥१३॥

---

(1) कर्णिकान् केसरांश्चैव- क. घ छ. ट त.
कर्णिकाकेसरांश्चैव- ग. च. द ध.
कर्णिकां केसरांश्चैव- ख. थ.
कर्णिकाकेसरं चैव- फ

(2) दलांश्चोपदलांस्तथा- क. ग च ज. ट. ड. ढ. त. थ. द. प.
दलाश्चोपदलास्तथा- घ. छ ठ. फ
तथान्युपपदानि च- ध

(3) संलेख्य- क. ग. घ. च. ज. ट. ठ. ड. ढ. त. थ. द. प.
संलिप्य- फ.

(4) चाधारशक्ति योजयेत्- फ.

(5) तन्मध्ये शिवपूजादीन् प्रकुर्यात पूर्ववत् क्रमात्- क. ख. क्ष.

(6) पद्यार्धमिदं- क. ख. क्ष. ट. त. थ. ब. पुस्तकेषु न दृश्यते ।

तच्चक्रे स्थितिमार्गेण प्रासादं तु[1] समुद्धरेत् ।

[ प्रासादपदार्थः ]

[2]प्रसादयेति प्रासादः गुरुत्राण्यैव लक्षणात् ॥ १४ ॥

प्राशब्दः[3] स्यात् शिवो ज्ञेयः साशब्दः[4] शक्तिरुच्यते[5] ।

---

तच्चक्रे तस्मिन् चक्रे स्थितिमार्गेण चक्रविन्यस्तवर्णक्रमेण प्रासादं तु पञ्चप्रकारप्रासादमन्त्रम् समुद्धरेत् समुद्धरण कुर्यात् । प्रसादस्व इति गुरुत्राण्यैव लक्षणात् मन्त्रोऽय प्रासादः इत्युच्यते । १४॥

प्रा इति शब्दः शिव इति ज्ञायते । सा इति शब्दः शक्तिरिति ज्ञायते । दशब्दस्तु द इति शब्दस्तु तत्स्वरूपं प्रा सा इत्यभिहितशिव

---

(1) प्रसादं तु- घ. ङ. ट
प्रसादादि- फ.
मन्त्राणां तु- थ.

(2) पद्यार्धमिदं- क. ख. ग. घ च. छ. ज. झ. ट. ठ. ड ढ. त. थ. द. ध. प पुस्तकेषु न दृश्यते ।

(3) प्राशब्दं- क. ग. छ ट. ठ ञ. द. प.
प्रशब्दं- ड.

(4) शिवं ज्ञेयं साशब्द- क ग. घ छ. ज. ट. ठ. ड. ढ. त. थ. द प.

(5) शिवं ज्ञानं साशब्दो गतिरुच्यते- फ.

तत्स्वरूपं तु दश्शब्दः[1] त्रिवर्णमभिधीयते ॥ १५ ॥

दानेन[2] मुक्तिदो[3] यस्मात् तस्मात् प्रासादः[4] उच्यते ।
[5]शुद्धशैवमिति प्रोक्तं तस्मात् शुद्धमिति स्मृतम् ॥ १६ ॥

---

शक्तिस्वरूपमिति ज्ञातुं शक्यते । एवं त्रिवर्णमभिधीयते प्रासाद इति त्र्यक्षरं पद त्रिरूपं भवति ॥१५॥

यस्मात् येन कारणेन दानेन 'दा दाने' इति धातुः दानार्थे वर्तते' तस्मात् तेन कारणेन मुक्तिदः दश्शब्दः मुक्तिं ददातीति मुक्तिदायकः इत्युच्यते । प्रासादशब्दस्य निर्वचनं एवमपि वर्तते । इति एवं शुद्धशैवं प्रोक्तम् कथितम् । तस्मात् शुद्धमिति इदं स्मर्यते ॥१६॥

(1) दबुध्दया तत्स्वरूपं च– फ
तत्स्वरूपं तु दश्शब्दं– क. ग. च. ज. ट. ठ. ड. त. थ. द. प.
(2) दानेति– क. ड. त. थ. द. प.
दाने तु– ट.
(3) मुक्तिदं– क. ग. ब. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.
(4) प्रासाद– क. ग. घ. च. छ. झ. ट. ठ. ड. ढ. त. थ. द. ध. प.
(5) पद्यार्धमिदं– क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प. पुस्तकेषु न दृश्यते ।

अज्ञानज्ञानविज्ञेयं[1] त्रितयं[2] विद्यते[3] क्रमात् ।
अन्धकारवदज्ञानं दीप्तिवद्[4]ज्ञानमुच्यते ॥ १७ ॥
[5]ज्ञेयं भास्करवद् प्रोक्तं इति[6] ज्ञानं विशिष्यते[7] ।

---

अज्ञान-ज्ञान विज्ञेयभेदेन त्रितयं क्रमात् विद्यते ज्ञायते । अज्ञानं अन्धकारवत् अज्ञानं तमिस्रावदिति, ज्ञानं च दीप्तिवत् प्रकाशवत् इति च उच्यते अभिधीयते ॥१७॥

ज्ञेयं ज्ञातु योग्यं वस्तु भास्करवत् प्रोक्तं रविवत् उच्यते, इति ज्ञानं विशिष्यते । ननु ज्ञानस्य कथं विशिष्टत्वम् ? इति चेत् उच्यते– शिव-शक्तिस्वरूपप्रासादः यस्य पुरुषस्य हृदि वर्तते तस्याऽऽवारकः मलान्धकारो नास्ति । तादृशप्रासादवान् पुरुषः ज्ञानरूपी नित्यमुक्तो भवति । परशिवः स्वचिच्छक्तिप्रभापुञ्जरञ्जितो भवति । शिव ज्ञातुं तस्य चिच्छक्तिं बिना अन्यः

---

(1) विज्ञेया - ज.
(2) त्रिविधं- ख.
(3) विन्द्यते- क त.
विन्दते- ट ठ. ढ. द
(4) दीपवत्- ज. झ. ड थ. ध.
दीपकम्- फ
(5) इदमर्धं- ड. प. पुस्तकयोः न दृश्यते ।
(6) तस्मात्- फ
(7) विशेष्यते- क द.

शिवज्ञानात् परं ज्ञानं[1] न हि लोकेषु विद्यते[2] ॥ १८ ॥

एतद्धे तत्परं ज्ञानं प्रासा[दश्चे]ति कीर्तितम्[तः] ।

[ प्रासादमन्त्रस्य पञ्चधा विभागः ]

प्रासादः[3] पञ्चधा प्रोक्तः[4] तद्भेदो[5] वक्ष्यतेऽधुना[6] ॥ १९ ॥

---

उपायः नास्ति । यथा रविः स्वकिरणैरेव स्वयं प्रकाशते- तथा शिवोऽपि चिच्छक्त्या ज्ञेयः भवति । तस्मात् चिच्छक्त्यभिधानज्ञानमेव विशिष्यते । **शिवज्ञानात्** शिवप्रासादमन्त्रज्ञानात् **परं** अधिकं उत्कृष्टं **ज्ञानं** मन्त्रज्ञानम , **लोकेषु न विद्यते हि** नास्त्येवेत्यर्थः ॥१८॥

**तत्परं ज्ञानं एतद्धे** तत् शिवज्ञानं इदमेव । **प्रासादश्चेति कीर्तितः** इदमेव प्रासादज्ञानमित्युक्तम । **प्रासादः** शिवज्ञानस्वरूपभूतप्रासादमन्त्रः **पञ्चधा प्रोक्तः** पञ्चविधभेदेन कथ्यते । ते पञ्चप्रासादमन्त्राः के वा इत्युक्ते **अधुना** इदानीं **तद्भेदः वक्ष्यते** कथ्यते ॥१९॥

---

(1) नास्ति- फ.

(2) तत्समं च न विद्यते- फ.

(3) प्रासादम्- क ग. च. छ. ज ङ. ट. ठ. ड. ढ त. थ. द ध. प फ.

(4) प्रोक्तम्- क. ग. घ. च. छ. ज ट. ठ. ड. ढ त. थ द. ध. प. फ.
ज्ञेयः- झ.

(5) तद्भेदं- क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(6) वक्ष्यते क्रमात्- फ.

शुद्धो मूलं[1] तथा तत्त्वं आदिरात्मेति पञ्चधा ।
[2]पञ्चप्रासादमित्युक्तं[3] शुद्धप्रासाद[4] उच्यते ॥२०॥

[ तत्र प्रथमः शुद्धप्रासादः ]

शुद्धः[5] शिव[6] इति प्रोक्तः[7] तस्मात् शुद्धः प्रकीर्तितः[8] ।

---

शुद्धः शुद्धप्रासादः इति मूलं मूलप्रासादः इति तथा तत्त्वं तत्त्वप्रासादः इति आदिः आदिप्रासादः इति आत्मा आत्मप्रासादः इति प्रासादमन्त्रः पञ्चधा पञ्चप्रकारेण वर्तते इति एवंप्रकारेण पञ्चप्रासादं उक्तम् । शुद्धप्रासादः उच्यते तेषां पञ्चप्रासादानां प्रथमस्य शुद्धप्रासादस्य लक्षणं उच्यते ॥२०॥

शुद्धः शिव इति प्रोक्तः शिवतत्त्वं शुद्धमित्युच्यते । शुद्धत्वं नाम समस्तदोषरहितत्वम् । तस्मादयं मन्त्रः शुद्धः प्रकीर्तितः । शिवस्य शुद्ध-

---

(1) शुद्धमूलम्– घ. फ.
शुद्धमूलः– क. ग. च ज. ट. ठ. ड. ढ. त. थ द. ध. प.
शुद्धमन्त्रः– छ.

(2) पद्यार्धमिदम् ङ. प. पुस्तकयोः न दृश्यते ।

(3) पञ्चप्रासादमेवोक्तम्– फ
प्रासादा उदितास्तेषाम्– ञ.

(4) प्रासादम्– ञ.

(5) शुद्धं– ग. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ.

(6) शिवं– ग घ च. छ. ज. ट. ठ. ड. ढ. त थ. द. ध. प. फ.

(7) प्रोक्तम्– क. घ. छ. ट. ठ. ड. ढ. त. थ द. ध. प. फ.
ज्ञेयम्– ग. च. ज.

(8) शुद्धम् प्रकीर्तितम्– क. ग. घ. च. छे. ज. ट. ठ. ड ढ. त. थ. द. प.
शुद्धमिति स्मृतम्– फ.

नादाख्यं यत् परं बीजं आदिस्वरसमन्वितम्[1] ॥ २१ ॥
तत् शुद्धमिति विज्ञेयं सर्वकारणकारणम्[3] ।
मुक्तिदं[4] परमं दिव्यं[5] सर्वसिद्धिप्रदायकम्[6] ॥ २२ ॥

---

त्वात् शिवबीजं शुद्धप्रासाद इति कथ्यते । नादाख्यं नादाभिधानं परं पराभिधानं च यद्बीजम् ह इति शिवबीजम् तत् आदिस्वर-समन्वितं ह् इति व्यञ्जनाक्षरं अकारेण संयुक्तं सत् ह इति मन्त्रो भवति ॥२१॥

तत् हकाराख्यं मन्त्रम् सर्वकारणकारणं सर्वेषां कारणानामपि कारणभूतम्, शुद्धं शुद्धप्रासादमन्त्रमिति विज्ञेय ज्ञातव्यम् । एवं च ह इति शुद्धप्रासादमन्त्रः उद्धृतो भवति । मुक्तिदं कैवल्यदायकम् परमं उत्कृष्टम्, दिव्यं स्वचिच्छक्तिदीप्तिमत् सर्वसिद्धिप्रदाय अणिमाद्यष्टैश्वर्य-प्रमुखसमस्तसिद्धिप्रदम् ॥२२॥

---

(1) सर्वभूते व्यवस्थितम्– क. ख. घ. ङ. ट ठ ड ढ. त थ. द. ध. प. फ.
सर्वभूतव्यवस्थितम्– ग. च. ज.

(2) च ज्ञेयम्– क. छ. त. फ.

(3) सर्वभूतव्यवस्थितम्– झ.

(4) मुक्त्यर्थं– फ.

(5) गुह्यम्– ग.

(6) एतदनन्तरं–

नादं गुह्यं परं बीजं
देही भूतं च पञ्चमम् ।
सान्तं भूतान्तं तत्त्वान्तं
शिवार्णं शून्यमव्ययम् ॥

इत्यधिकं दृश्यते। परं तु इदं वर्गभेदपटले २३ संख्याकत्वेन वर्तते ॥

तद्विदित्वा महासेन! देशिकः[1] पाशहा[2] भवेत् ।

[ द्वितीयः मूलप्रासादः ]

शुद्धप्रासाद[3] इत्युक्तः[4] मूलप्रासाद[5] उच्यते ।। २३ ।।

सर्वेषामेव तत्त्वानां मूलं[6] शिव[7] इति स्मृतः[8] ।

---

हे **महासेन!** हे सुब्रह्मण्य! **तत्** शुद्धप्रासादमन्त्रस्वरूपम् **विदित्वा** ज्ञात्वा, **देशिकः** आचार्यः **पाशहा भवेत्** शिष्याणां समस्तपाशमोचनकरो भवति। **इति** पूर्वोक्तप्रकारेण **शुद्धप्रासादः** शुद्धप्रासादमन्त्रः **उक्तः** कथितः। **इतः** परं **मूलप्रासादः उच्यते** मूलप्रासादमन्त्रः कथ्यते ।।२३।।

**सर्वेषामेव तत्त्वानां** समस्ततत्त्वानां **शिवः मूलमिति स्मृतः** शिव एव मूलकारणम् इति ज्ञायते । **तस्मात्** तेन कारणेन **मूलमिति**

---

(1) देशिकैः- फ
(2) पाशभित्- झ.
पाशच्छित्- ड. प
(3) प्रासाद- क घ. छ. ट.
(4) एवोक्तम्- क. ग. घ. च छ. ज. ट. ठ. ड. ढं. त. थ. द. ध. प.
एवोक्तः- ख.
इत्युक्तम्- फ.
(5) प्रसादम्- क. छ. ट.
प्रासादम्- ग. च. छ. ज. ठ. ढ. त. थ. द. ध. प.
(6) मूलः- ग. ट. ड. थ प
मूर्तिः- च.
(7) शिवं- क.
(8) स्मृतम्- ख ट. ध फ

तस्मान्मूलमिति[1] प्रोक्तं[2] मूलमन्त्रः तदुच्यते[3] ॥ २४ ॥

[ मूलमन्त्रोध्दारक्रमः ]

षष्ठं त्रयोदशान्तं च[4] पञ्चमे[5] विनियोजयेत् ।

---

प्रोक्तं तत् शिवबीजं मूलप्रासादाभिधानयुक्तं भवति । तत् तस्मात् मूलमन्त्रः उच्यते मूलमन्त्रस्योद्धारः कथ्यते । २४ ॥

षष्ठं स्थितिमार्गस्य प्रथमवर्गेत्युक्तमाश्विकाभिधानप्रथमावरणपूर्वदल-लिखितसपूर्वगणनया प्रदक्षिणेन रकारः षष्ठो भवेत् । तस्मात् षष्ठाभिधानो भवति रकारः । तस्मात् षष्ठाभिधानरकारं त्रयोदशान्तं च स्थितिमार्गस्य द्वितीयवर्गेत्युक्तराजसनामधेयद्वितीयावरणस्य पूर्वदललिखित-अकारादितः प्रदक्षिणक्रमेण परिगणितम् चेत् औकारः त्रयोदशान्तो भवति । तस्मात् औकारस्य त्रयोदशान्तत्वमेव । तत्त्रयोदशान्तसंज्ञायुक्तौकारं च पञ्चमं पञ्चमाभिधानहकारे विनियोजयेत् । सम्यक संश्लिष्टं कुर्यात् ।

(1) मूल इति- ट.

(2) ज्ञेयम्- ख. झ.

(3) मन्त्रं तदुच्यते- क. ग. च. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
मन्त्रमिहोच्यते- फ.

(4) तु- फ.

(5) पञ्चम- ढ द.

**शिवशक्तिसमायुक्तः[1] शिवमन्त्र[2] इति[3] स्मृतः[4] ॥ २५ ॥**

---

एवं संयोजनं कृतं चेत् ह्रौ इति भवति । **शिवशक्तिसमायुक्तः** आधारशक्तिकार्यपरबिन्द्वभिधानसाकारः मन्त्रोद्धारसमये शून्यवाचकः, अपभ्रंशे सति वृत्ताकारबिन्दुर्भवति । यत्र मन्त्रोद्धारसमये बिन्दुवृत्तमप्यागच्छति तत्र सकारप्रर्यायनामपठितानि भवन्ति । अथवा आधार-आधेय-शिव-शक्ति-कार्य-कारण-पर-अपर-बिन्दु-नादेति द्वये वाच्ये बिन्दुरित्यभिहितो भवेत् । तस्मात् शिवशक्तिसमायुक्तः सः ह्रौकारः ,बिन्दुवृत्तेन युक्तश्चेत् ह्रौं इति मन्त्रो भवति । एषः ह्रौं इति कथितमूलप्रसादमन्त्रः. अस्मिन् तन्त्रे शिवमन्त्र इत्युच्यते ॥

सः शिवमन्त्रश्च द्विधा बोध्यते क्रियासारे–

**" अथर्ववेदे यः प्रोक्तः मन्त्रः प्रासादसंज्ञकः ।**
**सर्वाभीष्टं च कुरुते स्वाश्रितानामनारतम् ॥**

---

(1) समायुक्त- क ग छ. ज. झ. ट. ठ. ड. ढ. त. थ. द ध. प. फ.
(2) शिवमन्त्रं- ग. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प.
मूलमन्त्रं- फ.
(3) इह- क. ग. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध प.
(4) स्मृतम्- झ.
उच्यते- क. ग. घ च छ. ज. ट. ठ. डा ढ. त. थ. द. ध. प फ.

इतः परं " अथर्ववेदे " इत्यारभ्य " भजतां सर्वसिद्धिदः " इत्यन्तः षड्षट्चतुष्टयभागः ' ग. च. ' पुस्तकयोः दृश्यते । परं तु अयं भागः संस्कृत-कर्णाटव्याख्याकाराभ्यां स्वस्वव्याख्याने ग्रन्थान्तरेभ्यः उद्धृतः ॥

ब्रह्माङ्गः स द्विधा प्रोक्तः मन्त्रः प्रासादसंज्ञकः ।
वैदिकस्तांत्रिक इति वह्नियोगवियोगतः ॥ ”

इति । अथर्ववेदे अथर्वणवेदे यः प्रासादसंज्ञको मन्त्रः प्रासादो नाममन्त्रः प्रोक्तः कथितः । सः प्रासादमन्त्रः स्वाश्रितानां स्वभक्तानां जनानाम् अनारतं सर्वदा सर्वाभीष्टं च कुरुते सर्वाभीष्टप्रदो भवति । ब्रह्माङ्गः ब्रह्म-भेदैः अङ्गभेदैश्च सहितः सः प्रासादसंज्ञको मन्त्रः वह्नियोगवियोगतः रेफयोगाभ्यां वैदिकः तान्त्रिकः इति द्विधा प्रोक्तः द्विविधो भवति ।

[ वैदिकस्य मूलप्रासादत्वम्, तान्त्रिकस्य आदिप्रासादत्वम् ]

एवं वह्नियोगवियोगतः वैदिकतान्त्रिकभेदेन प्रासादमन्त्रस्य द्वैविध्ये सत्यपि अस्मिन् शुद्धाख्यतन्त्रे वैदिकप्रासाद एव मूलप्रासाद इत्युच्यते तान्त्रिकप्रासाद एव आदिप्रासाद इत्युच्यते ।

[ वैदिकमन्त्रस्वरूपम् ]

“षष्ठः त्रयोदशान्तौ द्वौ बीजे त्रिदशवर्त्मनः ।
बिन्दुनादौ प्रयुञ्जीत यत्तत्प्रासादमीरितम् ॥ ”

षष्ठत्रयोदशान्तौ द्वौ रेफः औकारः इत्युभयम् । बिन्दुनादौ च अनुस्वारं च त्रिदशवर्त्मनः बीजे भूतान्ताभिधव्योमबीजे हकारे प्रयुञ्जीत चेत् यद्भवति तत् प्रासादमीरितम् ह्रौं इति बीजं प्रासाद मन्त्रो भवति । रकारौकारानुस्वारहकारसंयोगैः प्रासादमन्त्रो भवति इति वह्नियोगः । एवं प्रकारेण रेफयुक्तः ह्रौं इति प्रासादमन्त्रः वैदिकमन्त्र इति कथ्यते ।

[ प्रासादमन्त्रमूर्तिस्वरूपम् ]

शिवमेकं[1] विजानीयात् मन्त्रमूर्तिं[2] शिवं परम्[3] ।

---

[ तान्त्रिकमन्त्रस्वरूपम् ]

शारदातिलके-

''सान्तः सद्यान्तसंयुक्तः बिन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तः भजतां सर्वसिद्धिदः ॥ ''

सकारस्य अन्तः सान्तः हकार इत्यर्थः । स हकारः सद्यान्तसंयुक्तः सद्योजाताभिधान-ओकारस्य अन्तेन औकारेण युक्तः बिन्दुभूषितमस्तकः अनुस्वारयुक्तः हौंकारः भवति । एष मनुः मन्त्रः भजतां जपतां सर्वसिद्धिदः समस्तसिद्धिप्रदः प्रासादाभिधः प्रोक्तः प्रासादमन्त्रः इति कथितः । एवं वह्निबीजं विना कृतः प्रासादमन्त्रः हौमिति भवति ; इति तान्त्रिकः शिवमन्त्रः ॥२५॥

तस्य प्रासादस्य मूर्तिभावः उच्यते— शिवमिति । शिवं शिवतत्वम् एकं अद्वितीयं विजानीयात् जानीयात् । परं शिवं परमं शिव-

---

(1) एवं- झ.

(2) मूर्तिः-- क. ख. ग. घ. च. ज. ट. ठ ड. ढ त. द. ध.

(3) परं शिव- क. ग. घ. च. ज ढ त. द. ध. प.
परः शिवः ख ठ
वरं शिवम्- ट.

नादः किरीटमित्युक्तः बिन्दुः वक्त्रमुदाहृतः[1] ॥ २६ ॥

---

तत्त्वम्- मन्त्रमूर्तिं मन्त्रस्वरूपम् विजानीयात् जानीयात् । नागरलिपि-भिरेव शिवमन्त्रादिमन्त्रोद्धारः कर्तव्य :; नान्यलिपिभिरिति आगमनिर्णयः । नादः किरीटमित्युक्तः नादः ह्रौं इति प्रासादमन्त्रमूर्तेः मकुटं भवति । बिन्दुः वक्त्रमुदाहृतः बिन्दुः तस्य मन्त्रमूर्तेः शिवस्य मुखं भवति । ह्रौं इति प्रासादमन्त्रस्योपरि विद्यमानमुल्लसद्दशानुस्वाररूपाबिन्दुरेवशिव-मन्त्रमूर्तेः मुख उच्यते । बिन्दुरूपापराशक्तिः तस्य परमेश्वरस्य निष्कला शक्तिरिति कथिता । सा परा शक्तिरेव बिन्दुरूपा भवति । सः बिन्दुशब्दः शक्तिबीजाभिधानविकलाक्षरेष्वपि वर्तते । पराशक्तेः शान्त्यतीतकलाभिधान-मप्यस्ति ॥

पौष्करे-

"लयादिव्याप्रतिर्यत्र शुद्धोऽध्वा वा यतोऽजनि ।
सा तु कुण्डलिनी शम्भोः नित्याधिष्ठेयरूपिणी ॥"

लयादीति । यत्र लयादिव्याप्रतिः यथा कुण्डलिन्या लय-भोग-अधिकारत्रिरूपव्यापारी भवति, यतो वा शुद्धोऽध्वा अजनि यस्मा

---

(1) नादं किरीटमित्युक्तं बिन्दुर्वक्त्रमुदाहृतम्- क. ग. घ. च. छ ज. झ. ट. ठ. ड. ढ. त. थ. द. भ. प. फ.

**अकारो नाद इत्युक्तश्चोकारो बिन्दुरुच्यते ।**
**औकार आदिशक्तिः स्यात् नादश्चैवादिरुच्यते ॥ २७ ॥**

---

कुण्डलिन्याः सकाशात् शुद्धतत्त्वभुवनादिषड्विधमार्गः अजायत, **शम्भोः नित्याधिष्ठेयरूपिणी** परमेश्वरस्य सदा अविनाभावेनाधिष्ठेयरूपा, **सा तु सा पराशक्तिस्तु कुण्डलिनी** कुण्डलिनी इत्युच्यते । लय-भाग-अधिकार-त्रिरूपभेदेन शिव-सदाशिव-महेश्वरतत्त्वानां प्रवृत्तिः अत्र, यतः शुद्धतत्त्व-भुवनादिषड्विधः अध्वा अजनि, परमेश्वरस्य **नित्याधिष्ठेयरूपिणी** विद्येश्वर-सदाशिवादीनां तनूकरणकारणे उपादानभूता सा कुण्डलिनी शक्तिः परबिन्दुः भवति ॥

परमेश्वरस्य लीलाव्यापाराणां तत्राभिव्यञ्जकानां च बिन्दोरेव नादादिक्रमेण शब्दोत्पादकत्वात् बिन्दुरेव मुखं भवति । अस्य प्रासादस्योपरि अनुस्वार-रूपेण वर्तित्वात् बिन्दुः मुखवत् विभाति ॥२६॥

**अकारो नाद इत्युक्तः** अवर्णः नाद इत्युच्यते । **उकारो बिन्दुरुच्यते** उवर्णः बिन्दुः भवति । **औकारः आदिशक्तिः स्यात्** औकारः आदिशक्तिबीजमित्युच्यते । **नादश्चैव आदिरुच्यते** परशिवस्य निष्कला शक्तिरेव नादः, अस्य आदिशक्तिरिति पर्यायनाम वर्तते । अ-इ-उ इत्यक्षरत्रययोगेन ए-ऐ-ओ औ इति चत्वार्यक्षराणि भवन्ति । अत्र अ-इ इत्यक्षरद्वययोगेन ए-ऐ-कारौ संभवतः । अ-उ इत्यक्षरद्वययोगेन ओकारौकारौ संभवतः । एवं च अकार-उकाराख्यनादबिन्द्वोः संश्लेष-रूपौकार एव आदिशक्तिर्भवति । तथाच नादाख्यादिशक्तिरेखाभूतज्वालारेखे एव शिवरूपमन्त्रमूर्तेः मकुटं भवति ॥२७॥

हकारो देह इत्युक्तः[1]
द्वौ[2] [द्वे] शृङ्गे[3] तु भुजे तथा[4] ।
वह्निं[5] पादद्वयं विद्यात्[6]
मन्त्रमूर्तिरुदाहृता[7] ॥ २८ ॥

---

हकारो देह इत्युक्तः तस्य प्रासादमन्त्रमूर्तेः परमेश्वरस्य हकार एवं देह इति कथ्यते । द्वे शृङ्गे तु भुजौ तथा एवमेव शाम्भवी रेखेत्युक्ते पार्श्वरेखे एव द्वे शृङ्गे ; इमे शृङ्गे प्रासादमन्त्रमूर्तेः शिवस्य द्वौ बाहू वह्निं पादद्वयं विद्यात् अग्निरेखेत्युक्ताधोरेखे एव शिवमूर्तिः बीजस्य पादद्वयं ज्ञेयम् । मन्त्रमूर्तिरुदाहृता एवंप्रकारेण शिवमन्त्र शिवदेहाकारः उच्यते ॥

---

(1) हकारं देहमि युक्तं– क. ख. ग. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.

(2) द्वयौ– क. ख. ग. च. छ. ज. ट. ठ. ढ. त. थ. द. प.
द्वयोः घ ङ. भ.

(3) शृङ्गौ – क. ख. ग. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. प.

(4) भुजशृङ्गसमुद्भवम्– फ.

(5) वह्निः– भ.
वह्नि– क. ख. ग. च. छ. ट. ठ. थ. ध. प.

(6) विन्द्यात्– क ट. ढ. त. थ. द भ.

(7) दाहृतः– ठ.
दाहृतम्– क. घ. छ. ट. ड. ढ. त. थ. द. ध. प. फ.

[ शिवमन्त्रे भेदत्रयम्, तत्स्वरूपाणि च ]

स्थूलं[1]सूक्ष्मं[2] परं चैव [स्थूलः सूक्ष्मः परश्चैव]
त्रिविधस्तु[3] प्रकीर्तितः[4] ।
स्थूलं वर्णाकृतिं[5] विद्यात्[6]
सूक्ष्मं (क्ष्मः)तच्छब्द[7] उच्यते ॥२९॥

---

अयं शिवमन्त्रः त्रिभेद उच्यते– अयं शिवमन्त्रः स्थूल-सूक्ष्म-परभेदेन त्रिविधो भवति । अक्षराकारं स्थूलं जानीयात्, तदक्षरस्य ध्वनिः सूक्ष्म इति कथ्यते ॥२९॥

---

(1) स्थूल- ङ. थ. प.

(2) सूक्ष्म- ङ. प.

(3) त्रिविधं तु- क ख' ग. घ. छ ज. झ. ट. ठ. ड. ढ. त. थ. द. ध प.

(4) प्रकीर्तितम्- क. ग. घ. च. छ. ज. झ. ट ठ. ड. ढ त. थ. द. ध. प.

(5) वर्णात्मकं- फ.

(6) त्रिन्द्यात्- क. घ. ट ठ ड ढ. त. थ. द ध.

(7) तच्छब्दं- क. ग. घ. च. छ ज. ट. ठ. ड. ढ. त थ. द. ध. प. फ.

[1]वर्णमादित्रयं यत्तु तत् परं चेति कीर्तितम् ।

[ प्रासादमन्त्रभूतेन्द्रियगुणानां निरूपणम् ]

[2]देहं[3] भूतांशकं विद्यात् भूतानां[4] चेन्द्रियावहम् ।३०॥

भूतेन्द्रियगु[णाः]णान् सर्वान्[वें] शिवाङ्गं चेति कथ्यते[5] ।
[6]औकारं[रः] पृथिवी ज्ञेयं[यं] नादं[दो] वायुगमि[इ]ष्यते
॥३१॥

---

यत्तु आदित्रयं वर्णं प्रासादाख्यशिवमन्त्रस्य आदिभूतं यत् ह र् औ इति वर्णत्रयम्, तत् परं चेति कीर्तितम् परमित्यभिहितम् । भूतानां इन्द्रियावहं देहं च भूतांशकं विद्यात् , भूतानां इन्द्रियाश्रयं देहं पृथिव्यादिपञ्चभूतांशक जानीयात् ॥

सर्व भूतेन्द्रियगुणाः शिवाङ्गमिति कथ्यते समस्तभूतेन्द्रियगुणाः अस्मिन् प्रासादमन्त्रे निरूप्यन्ते । अत्र कथ्यन्ते इत्यर्थे कथ्यते इत्येकवचनम् । औकारः पृथिवी ज्ञेयः औवर्णः पृथिवीसम्बन्धीति ज्ञेयः । नादो वायुग इष्यते नादः वायुसम्बन्धीति ज्ञेयः ॥३१॥

---

(1) इद पद्यार्धं- ख पुस्तकमात्रे दृश्यते ।
(2) 'देहं' इत्यारभ्य 'शिवाङ्गम् चेति कथ्यते' इत्यन्तो भागः ख. फ. पुस्तकयोरेव दृश्यते ।
(3) देह- फ.
(4) भूतांशं- फ.
(5) शिवाणां ज्योतिरुच्यते- फ
(6) 'औकारं' इत्यारभ्य 'सलिल विन्दुरिष्यते' इत्यन्तो भागः- ख पुस्तकमात्रे दृश्यते ॥

तेजो वह्निरिति प्रोक्त(क्तः)
सलिलं बिन्दुरिष्यते ।
आकाशस्यान्ध(स्य ह)कारं तु(रस्तु)[1]
पाञ्चभौतिक[2]मु(उ)च्यते ॥ ३२ ॥

अकारादि क्षकारान्तं
पाञ्चभौतिकमुच्यते ।
पञ्च पञ्च प्रयुञ्जीत
पञ्चाशद्वर्णमीरितम्[3] ॥ ३३ ॥

---

वह्निः तेजः इति प्रोक्तः रेफः तेजस्सम्बन्धीति ज्ञेयः । बिन्दुः सलिलमिष्यते बिन्दुः अप्सम्बन्धीति ज्ञेयः । हकारस्तु आकाशस्य हकारः आकाशसम्बधीति ज्ञेयः । पाञ्चभौतिकमुच्यते एवं प्रासादमन्त्रस्य पञ्चभौतिकत्वं निरूपितम् ॥३२॥

अकारादिक्षकारान्तं अकाराद्याः क्षकारान्ताः पञ्चाशद्वर्णा अपि पाञ्चभौतिकमुच्यते पृथिव्यादिपञ्चमहाभूतसम्बन्धिनः इति कथ्यन्ते । पञ्चाशद्वर्णं अकारादिक्षकारान्तपञ्चाशद्वर्णाः एकैकभूतस्य पञ्चपञ्च दशदश यथा भवन्ति तथा प्रयुञ्जीत प्रयोक्तव्याः इति ईरितं कथितम् ॥३३॥

---

(1) अर्धचन्द्रं चकारं तु- फ.

(2) पञ्चभौतिक- क. घ. छ. ट. त. थ

(3) पञ्चांशयमिति स्मृतम्- फ

अन्तर्यत् पञ्चमं बीजं[1] तत्परं परिकीर्तितम्[2] ।
पाञ्च[3]भौतिकसम्बन्धः[4] जीवाधार[5] इति स्मृतः[6] ॥ ३४ ॥

एवम् ज्ञात्वा तु मन्त्रज्ञः[7] सर्वपापात् प्रमुच्यते[8] ।

---

**अन्तर्यत् पञ्चमं बीजं** पञ्चाशद्बीजान्तर्गतं यत् हकाराख्य शिवबीजम्, **तत् परं परिकीर्तितम्** तत् परमित्यभिहितम । **पाञ्चभौतिकसम्बन्धः** पञ्चभूतसम्बन्धिनः पञ्चाशद्वर्णा अपि **जीवाधार इति** जीवाभिधानस्य हकारस्य पुर्यष्टकमिति **स्मृतः** इति ज्ञायते । ३४॥

**मन्त्रज्ञः** शिवमन्त्रवित् पुरुषः **एवं ज्ञात्वा** इत्थं विज्ञाय **सर्वपापात् प्रमुच्यते** सर्वपापेभ्यः विश्लिष्टो भवति । एवं वै एतत्प्रकारेण पञ्च-

---

(1) अन्तो यत् पञ्चबीजं च– झ.
अन्तस्तत्पञ्चबीजं च– थ.
अन्ते यच्चाक्षरं विद्यात्– फ.

(2) प्रकीर्तितं– क.

(3) पञ्च– थ. द. ढ.

(4) सम्बधं– क ग. घ. च. छ. ज. ट. ठ. ड. द. ध. प.

(5) शिवाधार– ख. झ.
शिवाधारं– घ. छ ट ठ ड ढ. त. थ. द. ध. प. फ.
जीवाधारम्– क. ज.

(6) स्मृतम्– क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(7) मन्त्रज्ञा– प.

(8) पापैः प्रमुच्यते– झ.
पापक्षयो भवेत्– फ.

[ जीवप्रसादसंज्ञा )

एवं वै पञ्चभूतत्वं[1] जीव[2]प्रासाद[3] उच्यते[4] ॥ ३५ ॥
[5]चराचरादिभूतानां प्राणरूपः शिवः स्मृतः[6] ।
कलादि[7]शिवपर्यंतं मन्त्रैः सर्वं व्यवस्थितम् ॥ ३६ ॥

---

भूतत्वम् पञ्चविधभूतत्वम् जीवप्रासादः उच्यते जीवप्रसाद इत्युच्यते ।।३५।।

शिवः चराचरादिभूतानां स्थावरजङ्गमात्मकभूतानाम् प्राणरूपः जीवरूपः इति स्मृतः । कलादिशिवपर्यन्तं निवृत्तिकलाप्रमुखशिवतत्त्वाधिष्ठितशान्त्यतीतकलान्तम् सर्वं समस्तम्, मन्त्रैः व्यवस्थितम् मन्त्रैरेवव्यवस्थापितम् ।।३६।।

---

(1) एवं पाञ्चभौतिकत्वं– छ.
एव वै पाञ्चभौतित्वं– ध.
एव वै पाञ्चभूतित्वम्– ध.
एवं वै पञ्चभूतित्वं– ग. घ. च. ज. ट. ड. त. थ. द.
एवं वैं पञ्चभौतित्वं– क ठ.
एवं वै पञ्चभौतित्वात्– ङ. प फ

(2) जीवम्– त

(3) प्रसादम्– क घ ट.
प्रासादम्- छ. ठ. ङ. थ.

(4) इष्यते क. घ. छ ट ठ. त. ध.

(5) ' चराचरादि ' इत्यारभ्य ' सचराचरं ' इत्यन्तो भागः– क. ख. ग. छ ज. ट ठ ड ढ त थ. द. ध. प पुस्तकेषु न दृश्यते ।

(6) प्राणरूपशिवस्मृतः– ङ।
प्राणरूपं शिवम् स्मृतं– फ.

(7) कालाग्नि– ङ.
एकाग्नि– फ.

ब्रह्मादिस्तम्बपर्यन्तं
जगद्योनिश्चरा[1]चरम् ।
स्थावरं जङ्गमं चैव
दृश्यादृश्यं तथैव च ॥ ३७ ॥

स्थूलसूक्ष्मपरं चैव[2]
सकलं निष्कलं तथा ।
सर्वमेतज्जगच्चैव
त्रैलोक्यं सचराचरम् ॥ ३८ ॥

---

ब्रह्मादिस्तम्बपर्यन्तं जगद्योनिश्चराचरम् ब्रह्मादितृणान्तस्थावरजङ्गमात्मकप्रपञ्चस्योत्पत्तिकारणं यत् स्थावरं यच्च स्थावरम् जङ्गमं चैव यच्च जङ्गमम्, दृश्यादृश्यं तथैव च दृश्यं अदृश्यं च यत्- ॥ ३७ ॥

स्थूलसूक्ष्मपरं चैव स्थूलं सूक्ष्मं परं च यत् सकलं तथा निष्कलं यच्च निष्कलम्, सचराचरं स्थावरजङ्गमसहितम्, त्रैलोक्यं सर्वं एतज्जगच्चैव यच्च लोकत्रयात्मकं समस्तं जगत्-

---

(1) योनिचरा- घ. छ. प.

(2) परं ब्रह्म- ग च

भूतं भव्यं[1] भविष्यं[2] य[3]-
त्प्रसादे[4] सर्वमुद्धृतम्[5] ।

[ तृतीयः तत्त्वप्रासादः ]

मूल[6]प्रासाद[7] इत्युक्तः[8]
तत्त्वप्रासाद[9] उच्यते ॥ ३९ ॥

---

भूतं अतीतं च यत् भव्यं वर्तमानकालिकं च यत् भविष्यं यत् यच्च भाविकालिकम् सर्वं एतत्सर्वम्, प्रासादे मूलप्रासादमन्त्रोदेव उद्धृतं उद्धृत भवति । इति मूलप्रासादः उक्तः एवं मूलप्रासादमन्त्र निरूपितः । इतः परं तत्त्वप्रासादः तत्त्वप्रासादमन्त्रः उच्यते निरूप्यते ॥३९॥

---

(1) भव्य– ट.
(2) भविष्यत्– व. क्ष ह. घ.
(3) यः झ। तत्– थ.
(4) प्रसादं– प.
प्रासादः– ड.
(5) मुच्यते– थ.
(6) जीव– फ.
(7) प्रसादं– क. ध. क. ट.
प्रासादं– ग. च. ज. ठ. ड. ढ. त. थ. द, ध. प. फ.
(8) इत्युक्तं– क ग घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ
(9) तत्प्रसादं– क.
तत्त्वप्रासादं– ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. ध .

[1]तत्त्वं हि शिवभावत्वात् शिवमन्त्रः[2] इति स्मृतम् ।
तत्त्वं[3] चैवादिबीजं च तत्त्वान्ते[1] विनियोजयेत् ॥ ४० ॥

कार्यकारणसंयुक्तं सर्वतत्त्वात्मकं विदुः ।

---

तत्त्वं हि तत्त्वप्रासादमन्त्रः शिवभावत्वात् शिवस्वरूपत्वात् शिवमन्त्र इति स्मृतम् शिवमन्त्रः इति ज्ञायते । तत्त्वान्ते तत्त्वाभिधानव्यञ्जनरूपहारे आदिबीजं च विनियोजयेत् आदिबीजमिति प्रशस्तं अकारं योजयेत् । तदानीं प्रातिपदिकव्यञ्जनेन प्रत्ययरूपस्य अकारस्य संयोगात् हकारो भवति ॥ ४० ॥

कार्यकारणसंयुक्तं एतद्बीजं बिन्दुना संयुक्तं सत् हं इति भवति । तत्त्वं हं इति बीज तत्त्वप्रासादमन्त्रो भवति । एतत् तत्त्वप्रासाद

---

(1) पश्चार्धमिदं– क. ख. घ. छ. ज. ट. ठ. ड ढ. त. थ. द. ध प. स्तकेषु न दृश्यते ।

(2) मूलमन्त्र– फ

(3) षष्ठ– फ

(4) तथादि– छ.

[ चतुर्थः आदिप्रासादः ]

[1]तत्त्वप्रासाद[2] इत्युक्तः[3] आदिप्रासाद[4] उच्यते ॥ ४१ ॥

[5]आदिस्तु पूर्वभावि[6]त्वात् आदिरित्यभिधीयते ।
आद्यं[7] चतुर्दशं चैव जीवान्ते[8] विनियोजयेत् ॥४२॥

---

मन्त्रं सर्वतत्त्वात्मकं विदुः सर्वतत्त्वमयम् विजानीयात् । तत्त्वप्रासादः इत्युक्तः एवं प्रकारेण तत्त्वप्रासादः निरूपितः । अथ आदिप्रासादः उच्यते निरूप्यते ॥४१॥

आदिस्तु आदिप्रासादमन्त्रः पूर्वभावित्वात् प्रथमभावित्वात् आदिरित्यभिधीयते आदिशब्देनोच्यते । आद्यं राजसवर्गाख्यमध्यमावरणपूर्वदिग्दललिखितं अकारम्, चतुर्दशं चैव तस्य अकारस्य चतुर्दशं औकारं च जीवान्ते विनियोजयेत् जीवान्तनामयुक्तहकारे संयोजयेत् । अकारयुक्तहकारेण औकारयोजनाकृता चेत् हौ इति उद्धृतम् स्यात् ॥४२॥

---

(1) 'तत्त्वप्रासाद' इत्यारभ्य 'आदिरित्यभिधीयते' इत्यन्तो भागः- क ख छ ट. ठ त थ. पुस्तकेषु न दृश्यते ।
(2) प्रासाद- ग च. ज. ड. ढ. द. ध. प.
(3) इत्युक्तं- ग च. ज. ड. ढ. द. ध. प.
(4) प्रासादम् - ग घ. च. छ ज. ट. ठ. ड. ढ. थ. द. ध. प. फ.
(5) पद्यार्धमिदं- क ख. ज. ट ड. ढ त. थ. द. ध प. पुस्तकेषु न दृश्यते ।
(6) भाव फ.
(7) प्रथम- ध जं इतरेषु पुस्तकेषु. ।
(8) शिवान्ते- क. ट थ.

आधाराधेयसंयुक्तं आदिबीज[1]मिहोच्यते ।
कलाचतुर्दशार्णं च जीवान्ते विनियोजयेत् ॥ ४३ ॥

आधाराधेयसंयुक्तं सर्वसिद्धिप्रदायकम् ।
[3]आदिशक्तिः स्वबीजेन[4] संयोगादादिरुच्यते[5] ॥४४॥

---

आधाराधेयसंयुक्तं तत् बीजं बिन्दुनादात्मकानुसारेण संयुक्तं चेत् हौं इति स्यात् । इह अस्मिन् शुद्धाख्यतन्त्रे हौं इति तान्त्रिकप्रासादरूपमिदं आदिबीजमुच्यते आदिप्रासादबीजमित्युच्यते । कलाचतुर्दशार्णं च अकारं औकारं च जीवान्ते हकारे विनियोजयेत् संयोजयेत् ॥४३॥

पश्चात् हौ इत्यक्षरं आधाराधेयसंयुक्तं बिन्दुयुक्तं सत् हौं इति भवति । एतत् हौं इति आदिप्रासादबीजं सर्वसिद्धिप्रदायकं सर्वाभीष्टप्रदायकं भवति । आदिशक्तिसंयुक्तौकारसंबन्धात् हौं इति मन्त्रः आदिप्रसादः इत्युच्यते ॥ ४४ ॥

---

(1) आदिलिङ्ग– फ.

(2) 'कलाचतुर्दशार्णं' इत्यारभ्य 'सर्वसिद्धिप्रदायकं' इत्यन्तो भागः– क. ख. घ. छ. ज. ट. ड. ड. ढ. त. थ. द. ध. प. फ पुस्तकेषु न दृश्यते । अयं भागः पूर्वश्लोकार्थमेव प्रतिपादयति इति पूर्वोक्तादिप्रासादमन्त्रस्यैव प्रकारान्तरेणापि उध्दारः अनेन क्रियते इति भाव्यम् ॥

(3) पश्चार्धमिदं– क. पुस्तके न दृश्यते ।

(4) आदिशक्त्यार्थबीजेन– फ.

(5) संयोगादभिधीयते– झ.

[1]एतत्[2] शिवमयं बीजं
सर्वसिद्धि[3]करं परम् ।
[ पञ्चमः आत्मप्रासादः ]
[4]आदिप्रासाद[5] इत्युक्तः[6]
आत्मप्रासाद[7] उच्यते ॥ ४५ ॥

---

एतत् शिवमयं शिवस्वरूपम् हौं इति आदिप्रासादबीजं परं सर्वोत्कृष्टं सर्वसिद्धिकरं च भवति । इति एतावत्पर्यंतं आदिप्रासादमन्त्रः उक्तः निरूपितः । इतः परं आत्मप्रासादमन्त्रः उच्यते निरूप्यते॥ ४५॥

---

(1) इदं पदयार्धं- फ. पुस्तके न दृश्यते ।

(2) एवम्- ध.

(3) स्थिति- घ. छे ट..ढ. त. द.

(4) 'आदिप्रासादः' इत्यारभ्य 'अत्मबीजमिति स्मृतं ' इत्यन्तो भागः- क. ख घ. छ. ज. ट. ठ. ढ. त थ. द. ध. प. पुस्तकेषु न दृश्यते

(5) आदिप्रसादम्- घ. छ.
आदिप्रासादम्- ग. च. ज, ट. ठ ढ. त. थ द. ध. प. फ.

(6) इत्युक्तं- ग. घ. च. छ. ज. ठ ड. ढ. त. थ. द. ध. प. फ.

(7) आत्मप्रसादम्- घ. छ.
आत्मप्रासादम्- ग. च ज. ट. ठ ढ. त. थ. द. ध प. फ.

आत्मा [वै] जीवं [वः] इत्युक्त[क्तः] जीवः शिव इति स्मृतः[1]।
तस्मादेतच्छिवार्णत्वात् आत्मबीजमिति स्मृतम्[2] ।४६।

[3]भूतान्त तु समुद्धृत्य आदिप्रकृतिसंयुतम्[4]
[5]प्रथमं तु समुद्धृत्य आदिप्रकृतिसंयुतम्[6] ।४७।।

---

आत्मा वै जीवो भवति । जीवश्च शिव एव । तस्मात् शिवार्णत्वात् आत्मजीवयोः जीवशिवयोश्चाभेदात् एतत् इदं शिवार्णं आत्मबीजमिति स्मृतम् आत्मप्रासादबीजमित्युच्यते ॥४६।।

भूतान्तं भूतान्ताभिधानप्रातिपदिकस्थानीयहकारम् आदिप्रकृति संयुतम् तु आदिप्रकृत्यभिधानप्रत्ययस्थानीय-अकारेण संयुक्तं समुद्धृत्य उद्धरणं कृत्वा प्रथमं तु सात्त्विकवर्गस्य पूर्वदिग्दलगतप्रातिपदिकस्थानीयव्यञ्जनसकारम् आदिप्रकृतिसंयुतं तु प्रत्ययस्थानीय-अकारेण संयुक्तं समुद्धृत्य उद्धरणम् कृत्वा—॥४७॥

(1) शिवजीवमिति स्मृतम्- फ.

(2) शिवमन्त्रमिति स्मृतः- क. ख. ग. घ. च छ. ज. झ. ट. ठ ड त. थ. द. ध. प.

(3) 'भूतान्त'मित्यारभ्य 'आत्मबीजमिति स्मृतम्' इत्यन्तो भागः- फ. पुस्तके न दृश्यते।

(4) संयुक्तम्- घ.

(5) पद्यार्धमिदम्- ध. पुस्तके न वर्तते ।

(6) षोडशस्वरसंयुतम्- भ

तयोर्मध्यगता[1] शक्तिः[2] आत्मबीजमिति स्मृतम् ।
हृत्सरोरुह[3]मध्ये तु[4] संस्थितं [तः] सर्वकारणम्[5] ॥४८॥

आत्मप्रासाद[6] इत्युक्तः[7] जीव[8]प्रासाद[9]उच्यते ।

---

शक्तिः बिन्दुः तयोः पूर्वोद्धृतहकारसकारयोः मध्यगता अन्तराले प्रविष्टा चेत् हं स इति उद्धृतशिवबीजं आत्मबीजमिति स्मृतम् आत्मप्रासाबीजमिति ज्ञायते । हृत्सरोरुहमध्ये तु हृदम्बुजमध्ये संस्थितः अवस्थितः सर्वकारणं सर्वेषामपि कारणभूतः ॥४८॥

आत्मप्रासादः आत्माभिधानप्रासादमन्त्रः इत्युक्तः एव निरूपित एष एव प्रासादमन्त्रः जीवप्रासादः उच्यते जीवप्रासाद इत्यादि

---

(1) गतम्– क. ग. घ. छ. ज. ट. ठ. ङ. ढ. त. थ. द. प.
(2) शक्ति– ग ज.
(3) हृत्सरोवर– क. ड प.
(4) च– क ख. ग. घ. च. छ. ज. झ. ट ठ. ड. ढ. त थ. द. ध. प.
(5) सर्वकारणसंस्थिते– क.
सर्वकारणं संस्थिते– ट.
(6) प्रसादम्– क. घ. प्रासादम्– ग च. छ. ज. ट. ठ. ड. ढ. त. थ. ध प. फ.
(7) इत्युक्त– क. घ. छ. ज. ट. ठ. ड. ढ. त. थ. ध. प. फ.
एवोक्तम्– ग. च.
(8) पञ्च– फ
(9) प्रसादम्– क. घ. छ.
प्रासादम्– ग च. ज. ट. ठ. ड. ढ. त. थ. द ध. प. फ.

[शिवमन्त्रोद्धारमार्गोक्त्या निगमनम्]

एते वै शिवबीजत्वात् शिवमन्त्राः[1] इति स्मृताः[2] ॥४९॥

शुद्धादि चात्म[3]पर्यन्तं[4] स्थितिमार्गेण चोद्धरेत्[5] ।

---

कथ्यते । एते वै पञ्चविधप्रासादमन्त्राः शिवबीजत्वात् शिवमन्त्राः इति स्मृताः कथ्यन्ते ॥ ४९ ॥

शुद्धादि चात्मपर्यंतं शुद्धप्रासादमारभ्य आत्मप्रासादपर्यन्तान् एतान् पञ्चप्रासादमन्त्रान् स्थितिमार्गेण च उद्धरेत् शिवमन्त्रोक्त्यनन्तरं सदा-

---

(1) मन्त्रम्- ग. ज. थ फ.

(2) स्मृतम्- ग. ज. फ

स्मृतः- ट. ठ थ.

(3) शुद्धाद्यात्म- झवर्जं इतरपुस्तकेषु.

(4) पर्यन्ता- घ. छ त.

(5) चोद्धृताः- झ.

चोद्धृतम्- ग. च. ज.

चोध्दतः- त. थ.

चोदितः- प.

चोदिताः- ढ.

शिवमन्त्रो[1] मया[2] प्रोक्तः[3] सदाशिवमथ[4] शृणु ॥५०॥

[सदाशिवमन्त्रोद्धारक्रमः]

[5]सादाख्यं सौम्य[6]रूपत्वात् सृष्टिमार्गेण चोद्धरेत्[7]।

[सदाशिवमन्त्रस्य पञ्चधा विभागः]

मोक्षदश्चाभिवृद्धिश्च[8] काम्य[9]शांतिक[10]पौष्टिकाः[11] ॥५१॥

---

शिवमन्त्रं शृणु ॥ ५० ॥

सौम्यरूपत्वात् सौम्याकारत्वात् सादाख्यमन्त्राः सृष्टिमार्गेणोद्धृताः भवन्ति। सदाशिवमन्त्रो हि मोक्षदः- अभिवृद्धिः- काम्यः- शांतिकः- पौष्टिकश्चेति पञ्चविधो भवति ॥ ५२ ॥

---

(1) मन्त्रम्- क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(2) अयम्- झ.
इदम्- क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. द. ध. प. फ.
इति- थ.

(3) प्रोक्तम्- क. ग. घ च छ ज ट ठ. ड. ढ त थ. द ध. प. फ.

(4) मतः- ध.

(5) पद्यार्धमिदम्- त. पुस्तके न वर्तते।

(6) सर्व- ढ. द.

(7) चोध्दृता- झ द.
चोदिताः- ड. प.

(8) मोक्षदं चाभिवृध्दिश्च- क. घ. छ. ज. ट. ठ. ड. त. थ. द प. .
मोक्षदं चापि वृद्धिश्च- ध.
मोक्षदश्चाभिवृध्दिं च- ङ. थ प. फ.

(9) काम्यम्- क. ग, च. छ ज. ट. ठं डं ढं त थ. द. प. फ.

(10) शांतिं च- ड.थ प फ

(11) पौष्टिकम्- क. ग. घ. च. छ. ज. ट. ठं. डि. ढि त. थ. द. प, फ.

[तेषां अक्षरसंख्यानिर्णयः]

पञ्चाक्षरो मोक्षदः स्यात्[1] अभिवृद्धिः षडक्षरः[2]।
[3]काम्यमष्टाक्षरं विद्यात्[4] शांतिकं तु[5] नवाक्षरम्[6] ।.५२।
पौष्टिको[7] दशबीजं [जः] स्यात् मन्त्राः पञ्चविधाः स्मृताः[8] ।

[मन्त्रोद्धारक्रमारम्भः]

[9]मोक्षादिपञ्चमन्त्राणां उद्धारो वक्ष्यतेऽधुना ।.५३॥

---

मोक्षदमन्त्रः पञ्चाक्षरो भवति । अभिवृद्धिमन्त्रः षडक्षरो भवति । काम्यमन्त्रं अष्टाक्षरं विद्यात् । शांतिकं मन्त्रं नवाक्षरं विद्यात् ।।५२॥

पौष्टिको मन्त्रः दशाक्षरो भवति । एवं सदाशिवभट्टारकस्य मन्त्राः पञ्चविधाः भवन्ति । इदानीं मोक्षदमन्त्रप्रभृति पञ्चमन्त्राणां उद्धारः कथ्यते ॥ ५३ ॥

---

(1) मोक्षदं चाक्षरं पंञ्च- ख. (पा). ग घ च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
मोक्षं पञ्चाक्षरं विधात्- फ.
(2) अभिवृध्दिषडक्षरम्- क ह.
अभिवृध्दिः षडाक्षरम्- ढ द. फ.
(3) 'काम्यमष्टाक्षरं' इत्यारभ्य 'वक्ष्यतेऽधुना' इत्यन्तो भागः- क ङ. पुस्तकयोः न दृश्यते ।
(4) विन्द्यात्- क ट. ठ. ढ. त थ. द. ध.
(5) शान्तिकः स्यात्- झ.
शान्तिकं- ख. च.
(6) नवाक्षरः- झ.
(7) पौष्टिकं- क. ख. ग. घ. च. छ. ज. ट. ठ. ढि:त.थ.द ध.प.फ.
(8) मन्त्रं पञ्चदशं स्मृतम्- फ.
(9) पदयार्धमिदम्- क. ख. घ. छ. ज. ट. ठ ढ. त. थ. ध. प. फ. पुस्तकेषु न वर्तते ।

[प्रथमः मुक्तिदमन्त्रः]

[1]ईशे तुरीयमुद्धृत्य[2] चैन्द्रे चतुर्दशान्वितम्[3] ।
[4]परापरसमायुक्तं शक्तिं[5] चादिकलान्वितम्[6] ॥५४॥

---

ऐन्द्रे ऐन्द्रवर्गाख्यस्वरवर्गे चतुर्दशान्वितं प्रथमभूताकारात् चतुर्दशेन औकारेण सहितम्, ईशे ईशवर्गे तुरीयं प्रथमभूतशकारात् चतुर्थं हकारं उद्धृत्य उद्धरणं कृत्वा, एवं चेत् ह + औ = हौ इति भवति । परापरसमायुक्तं पूर्वोक्तं हौकारं विन्दुना सहितम्, कुर्यादिति शेषः। एवं चेत् हौं इति भवति। इदं च सदाशिवमन्त्राणां सर्वेषामपि आदौ भवति । अत एव पञ्चानामपि सदाशिवमन्त्राणां इदं आदिप्रासादबीजमित्युच्यते । शक्तिं च आदिकलान्वितां शक्तिबीजाभिधानव्यञ्जनात्मकप्रातिपदिकरूपसकारं आदिकलाख्यप्रत्ययरूप-अकारसंयुक्तम्, उद्धृत्येति शेषः । एवं चेत्– स इति भवति ।

---

(1) पदयार्धमिदम्- ङ. पुस्तके न वर्तते ।
(2) ईशे तुरीयमैन्द्रं च– झ.
ईशे- चतुर्थमुध्दृत्य - ग. च. ज. ढ. द. प.
ईशे च तुर्यमुद्धृत्य– क घ छ ठ. फे.
ईशे च तुरीयमुध्दृत्य– ट. त थ. ध.
(3) चतुर्दशकलान्वितम्– झ.
ऐन्द्रो चतुर्दशं युतम्– फ.
(4) 'परापरे'त्यारभ्य 'ऐन्द्रानलसमायुतम्' इत्यन्तो भागः– फ. पुस्तके न वर्तते ।
(5) शाक्ति– क. घ. छ ज. ट ठ ङ. त. थ. द प.
(6) कलान्वितम्– क. ग. घ. च छ. ज ट ठ. ढ. त थ. द. ध. प.

[1]ईशानान्तं[द्यं] समुद्धृत्य
[चै]ऐन्द्रानलसमायुतम् ।
सोमान्तं[2] द्विकलोपेतं
सोमादित्वादिसंयुतम्[4] ॥५५॥

---

ईशानाद्यं ईशानवर्गीयव्यञ्जनात्मकप्रथमाक्षरशकारं, ऐन्द्रानलसमायुक्तं ऐन्द्राख्यस्वरवर्गीयतृतीयाक्षरेण इकारेण सहितम्, समुद्धृत्य उद्धरणं कृत्वा, एवं चेत् शि इति भवति । सोमान्तं कुबेरवर्गीयान्तिमाक्षरव्यञ्जनरूपवकारम्, द्विकलोपेतं द्वितीयस्वरभूतेन आकारेण सहितम्, समुद्धृत्येति शेषः । एवं चेत् वा इति भवति । सोमादिं तु कुबेरवर्णीयप्रथमाक्षरव्यञ्जनभूतयकारम्, आदिसंयुतं स्वरादिभूतेन अकारेण सहितम्, समुद्धृत्येति शेषः । एवं चेत् य इति भवति । एवं च हौं स शि वा य इति उद्धृतानां पञ्चानामपि क्रमेण योगे "हौं स शिवाय" इति पञ्चाक्षरात्मकप्रथमसदाशिवमन्त्रो भवति । अयं च मोक्षप्रदो मन्त्रः ॥५५॥

---

(1) पद्याधंमिदं- क. ख. घ. छ. ज. ट. ठ. ड. ढ त. थ. द. ध. प. पुस्तकेषु न वर्तते ।

(2) सोमान्तौ- झ.
ोमान्ते- ग. च. ज
सोमान्त- ड. ध, प.

(3) द्वित्रिकलोपेतौ- झ.
द्विद्विकलोपेतौ- थ.
द्विकलोपेतौ- ज. ठ

(4) सोमादिमादि- फ.

अयं पञ्चाक्षरो मन्त्रः परमो मुक्तिदो भवेत्[1] ।

[द्वितीयः अभिवृद्धिमन्त्रः]

भूतान्तं तु[2] समुद्धृत्य चतुर्दश[3]कलान्वितम्[4] ।५६॥

कार्यकारणसंयुक्तं ईशाद्यं[5] त्रिकलान्वितम्[6] ।

---

अयं पञ्चाक्षरो मन्त्रः सदाशिवस्यैष पञ्चाक्षरो मन्त्रः प्रथमो मन्त्रः परमः उत्कृष्टः मुक्तिदः मोक्षदायकश्च भवेत् । भूतांतं तु समुद्धृत्य चतुर्दशकलान्वितं कार्यकारणसंयुक्तम् हकारं उद्धृत्य औकारेण संयोज्य कार्यकारणाख्यबिन्दुना योजितं चेत् हौं इति आदिप्रासादबीजं स्यात् ॥ ५६ ॥

ईशाद्यभूतइकारः त्रिकलात्मक-इकारयुक्तश्चेत् शि इति भवति । सोमान्तं द्विकलोपेतम् सोमवर्गस्य अन्तिमो वकारः द्विकलाख्याकारेण

---

(1) पञ्चाक्षरमिदं प्रोक्तं मुक्तिदं परमं विदुः- क. ख (पा) ग घ च. छ. ज. ट. ठ. ढ. त. थ. द. ध. प फ.

(2) ऐशान्यं- फ.

(3) सहसस- क. ख. (पा). ग. घ. च. छ. ज. ट. ठ. ड. ढ त. थ. द. ध. प फ.

(4) स्वरान्वितम्- क. ख. (पा). ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

(5) ईशान्यं- ग. च.

(6) युतम्- क. ख. (पा). ग. घ. च. छ. ज. ट ठ. ड ढ त. थ. द. ध. प.

[1]सोमान्तं[2] द्विकलोपेतं[3] सोमादित्वादि[4] संयुतम् ॥५७॥

वरुणान्तं चादियुक्त[5] मारुतान्तं[6] कलान्वितम्[7] ।

एवं षडक्षरः प्रोक्तः सर्वसिद्धिप्रदायकः[8] ॥५८॥

---

युक्तश्चेत् वा इति भवति । सोमादित्वादिसंयुतं सोमवर्गस्य आदिभूतयकारः अकारेण संयुक्तश्चेत् य इति भवति ॥ ५७ ॥

वरुणांतं चादियुक्तं वरुणवर्गस्यांतिमो नकारः आदिस्वरेण अकारेण युक्तश्चेत् न इति भवति । मारुतान्वित कलान्वितं मारुतवर्गस्यान्तिमो मकारः अकारेण युक्तश्चेत् म इति भवति । एवं च हौं शिवाय नमः इति भवति । अत्र नमः इति सान्तं ग्राह्यम् । तथा च "हौं शिवाय नमः" इति सदाशिवस्य षडक्षरो द्वितीयो मन्त्रो भवति । अभिवृद्धिप्रदोऽयं मन्त्रः । एवं षडक्षरः प्रोक्तः हौं शिवाय नमः इत्युक्तषडक्षरमन्त्रः सर्वसिद्धिप्रदायकः समस्तसिद्धिप्रदो भवति । अयं अभिवृद्धिमन्त्रः ॥५८॥

---

(1) सोमान्तं इत्यारभ्य 'प्रथमस्वरसंयुतम्' इत्यन्तो भागः– क. पुस्तके न वर्तते ।

(2) सोमान्त– ग. च.

(3) आकारयुतम्– झ.

(4) सोमादित्यादि - झ.

(5) चादिसंयुक्तम्– क. छ. ट. ठ. ढ. त. थ. द. ध. प.
चासंयुक्तम्– ख (पा). ग. च झ.

(6) मारुतान्तं क घ ट ठ. ढ. थ द. प.

(7) कलायुतम्– क ट. थ.

(8) एवं षडक्षरं प्रोक्तं सर्वसिद्धप्रदायकम्– क ग. घ. च. छ. ज. ट ठ. डा ढ. त थ. द. ध. प

[तृतीयः काम्यमन्त्रः]

गुह्यं चतुर्दशोपेतं शिवशक्तिसमायुतम् ।
भूतान्तमादिप्रकृतिकार्यकारणसंयुतम्[1] ॥५९॥

ईशे तृतीयवर्णश्च प्रथमं स्वरसंयुत[तः]म् ।
शक्तिर्मात्रादि[2]संयुक्ता[3] वारुणे द्वितृतीयकम्[4] ॥६०॥

---

गुह्यं चतुर्दशोपेतं गुह्येत्युक्तहकारः चतुर्दशस्वराभिधान-औकारेण युक्तः शिवशक्तिसमायुतम् बिन्दुना च युक्तश्चेत् हौं इत्यादिप्रासाद-बीजं भवति । भूतांतमादिप्रकृतिकार्यकारणसंयुतं हकारः अकारेण बिन्दुना च युक्तश्चेत् हं इति भवति ॥५९॥

ईशे ईशवर्गे तृतीयवर्णश्च व्यञ्जनात्मकसकारः प्रथमस्वरसंयुतः अकारेण युक्तश्चेत् स इति भवति । शक्तिः शक्तिबीजाभिधानः व्यञ्जन-सकारः मात्रादिसंयुक्ता आदिस्वरभूत-अकारेण युक्तश्चेत् स इति भवति । वारुणे वारुणवर्गे तृतीयकं तृतीयाक्षरभूतव्यञ्जनात्मकदकारः द्वि मात्राद्विसंयुक्तम्, अकारेण सहितश्चेत् दा इति भवति । अत्र मात्रादिसंयुक्ता इति पूर्वपदानुरोधेन द्विशब्दस्य मात्राद्विसंयुक्तपरत्वम् ॥६०॥

(1) वर्गादिजीवसंयुक्तं शक्तिशक्तिकलान्वितम्- ख.
(2) शक्तिमात्रादि- ङ.
शक्तिवीर्यादि- ख. (पा).
(3) संयुक्तम्- क. ख. ग. च. ज. ठ. त. थ. द. ध. प. फ.
(4) वारुणे तुर्यमादियुक्- ख.
वारुणे तु तृतीयकम्- ख. ग. च. ज.
वारुणेति चतुर्थकम्- क. घ. छ. ठ. त. थ.
वारुणेति चतुर्दशम्- छे.

तृतीयं[1] चास्थिसंयुक्तं[2] सोमान्तं द्विकलायुतम्[3] ।
अनिलादि[4]कलोपेतं एवमष्टाक्षरं विदुः[5] ॥६१॥

---

तृतीयं चास्थिसंयुक्तं तृतीयाभिधानः इकारः अस्थिवाचक-शकारेण परतो युक्तश्चेत् शि इति भवति । सोमान्तं द्विकलायुतम् सोमवर्गस्यान्तिमो वकारः अकारेण युक्तश्चेत् वा इति भवति । अनिलादिकलोपेतं अनिलबीजभूतयकारः अकारेण युक्तश्चेत् य इति भवति । एवमष्टाक्षरं विदुः एवं क्रमेण हौं हंस सदाशिवाय इति सदाशिवस्य अष्टाक्षरात्मकतृतीयमन्त्रो भवति । अयं च काम्यमन्त्रः ॥६१॥

---

(1) तृतीये- झ.
अस्थि च- फ.

(2) द्विकलायुक्तम्- फ.
स्वरसंयुक्ताश्च- झ.
चास्थिसंयुतम्- क. ट.

(3) सोमान्तद्विकलायुतम्- छ. ठ. त. थ. प
सप्तमान्तं द्विसंयुतम्- ध.
द्वितीये स्वरसंयुतम्- झ. (पा).
सोमान्त द्विकलान्वितम्- फ.

(4) क्षारुद्रादि- फ.

(5) एतदनन्तरं- क ग. घ. च. छ. ज. झ. ट. ड. ढ. ढ. त. थ. द. ध. प. फ. पुस्तकेषु "सोमान्तं सोमप्रथमं आदिस्वरसमन्वितम्" इत्यर्धपद्यम् दृश्यते । प्रकृताननुगुणमिति च तदस्माभिः न संयोजितम् ।

[1]एवमष्टाक्षरः प्रोक्तः सर्वसम्पत्प्रदायकः ।

[ चतुर्थः शान्तिकमन्त्रः ]

भूतान्तं तु[2] समुद्धृत्य षट्पञ्चत्रि[3]कलायुतम्[4] ॥ ६२ ॥

[5]कार्यकारणसंयुक्तं गुह्यं मात्रादिबिन्दुयुक् ।

---

एवं प्रोक्तः पूर्वोक्तः सदाशिवस्याष्टाक्षरो मन्त्रः समस्ताभीष्टप्रदो भवति । भूतान्तं तु व्यञ्जनात्मकं हकारं समुद्धृत्य उद्धरणं कृत्वा षट्पञ्चत्रिकलान्वितं औकारेण सहितम्- ॥६२॥

. कार्यकारणसंयुक्तं बिन्दुना सहितं च कुर्यादिति शेषः । एवं चेत् हौं इति भवति । गुह्यं हकारः मात्राबिन्दुयुक् हकारेण बिन्दुना च सहितश्चेत् हं इति भवति । शक्तिः मात्रादिसंयुक्ता स इति व्यञ्जनं शक्तिबीजं मात्रादीत्युक्त-अकारयुक्तं चेत् सकारो भवति । सप्तमान्तं सप्तवर्गीया-

---

(1) पद्यार्धमिदं- ख. पुस्तके न दृश्यते ।

(2) तत्त्वान्त च- फ.

(3) चतुर्दश - ख. (पा).

षट्पञ्च- ङ.

(4) कलान्वितम्- ख. ञ.

(5) पद्यार्धमिदं- छ. त. पुस्तकयोः न दृश्यते ।

गुह्यमात्रादिसंयुक्तं शक्तिं तस्योपरि न्यसेत्- ख. (पा). ग घ. च. ज ट. ठ. ढ. थ. द. ध. प. फ.

गुह्यमात्मर्द्धिसंयुक्तं शक्तिं तस्योपरि न्यसेत्- ङ.

[1]शक्तिः[2] मात्रादि[3]संयुक्ता[4] सप्तमान्तं[5] द्विसंयुतम्[6] ॥ ६३ ॥
अनिलान्तं त्वादियुक्तं[7] लयाद्यं वरुणादिकम्[8] ।

---

न्तिमवर्णः व इति व्यञ्जनं भवति । द्विसंयुतं पूर्वोक्तसकारात् परतः वकार-योजना कृता चेत् स्व इति भवति ॥६३॥

अनिलान्तं मारुतवर्गीयान्तिमव्यञ्जनरूपमकारः आदियुक्तं तु अकारेण युक्तश्चेत् म इति भवति । लयाद्यं लयमार्गे प्रथमवर्णभूतो व्यञ्ज-

---

(1) पदयार्धमिदं– ट· त पुस्तकयो न वर्तते ।
ऐशान्ये त्र्यक्लोपेतं सप्तमं चादिसंयुतम्– फ.
(2) शक्ति– क. ख. ज ढ. थ. द. प
(3) मन्त्रादि– ग च.
(4) संयुक्तं– ख. ग. च. ज. ड. थ.
समायुक्तम्– छ. ट. ढ. द प.
(5) सप्तमात्मं– क. थ.
सप्तमान्त– ष.
सप्तमान्त्यं– ढ.
(6) समायुतम्– ध.
(7) त्वादिभूतान्तं– क. (पा). घ. छ. ज. ट. ठ. ड. ढ द. ध. प.
(8) लयादिवरुणान्तकं– ज.
लयादिवरुणादिकं– ख. घ. छ. ज. ट. ठ. ड ढ थ ध.
लयाद्यम् वरुणाधिकं– क.
लयादि वरुणाधिकं– द.
अनिलान्तमादिभूतान्तं लयादि वरुणान्तकं- ग. च.
अनिलान्तमादिसंयुक्तं लयादि वरुणादिकम्– त.
अनिलान्तत्रिभूतान्तं प्रलयाद्वरुणान्तकम्– फ.
अनिलादिमादियुक्तं लय.दि [illegible]ादिकम्– प.

तयोर्मध्यगतं यान्तं आदिबीजेन[2] संयुतम्[3] ॥ ६४ ॥
सप्तमाद्यं[4] समुद्धृत्य षट्पञ्चमकलायुतम्[5] ।
बिन्दुनादसमायुक्तं नवाक्षरमिदं विदुः[6] ॥ ६५ ॥

---

नात्मकः क्षकारः आदियुक्तं तु आदिभूत-अकारेण युक्तश्चेत् क्ष इति भवति । सदाशिवमन्त्राणां सृष्टिमार्गेणोद्धारो युज्यते । ते स्थिति-लयमार्गाभ्यां नोद्धर्तव्य इति वक्तुं न शक्यते । अक्षराणां अभिधानसंज्ञाग्रहणे नामसंज्ञाभिगमनं च भवति । वरुणादिकं वरुणवर्गीयप्रथमभूतव्यञ्जनात्मकतकारः आदियुक्तं तु आदिभूत-अकारेण युक्तश्चेत् त इत भवति । यान्तं यकारान्तभूतव्यञ्जनात्मकरकारः आदिबीजेन संयुतं अकारेण सहितः सन् तयोः पूर्वोद्धृतं-क्ष-तवर्णयोः मध्यगतं मध्ये स्थितश्चेत् क्ष-र-त इत्यनुक्रमो भवति ॥६४॥

सप्तमाद्यं समुद्धृत्य सप्तमवर्गस्य प्रथमभूतव्यञ्जनात्मकयकारं पूर्वोद्धृताक्षरत्रयस्यानन्तरं उद्धृत्य आदिबीजेन संयुतं कुर्यात् । एवं चेत् य इति भवति । तदनन्तरं षट्पञ्चमकलायुतं षष्ठवर्णस्य पञ्चमवर्णभूतव्यञ्जनात्मकमकारं अकारसंयुक्तं उद्धरेत । एवं चेत् म इति भवति । बिन्दुनादसमायुक्तं सर्वाणि स्व आदिबीजानि बिन्दुयुक्तानि कुर्यादिति शेषः । एवं चेत् हौं हं स्वं मं क्षं रं तं यं मं इति सदाशिवभट्टारकस्य चतुर्थो मन्त्रः भवति । इदं नवाक्षरं विदुः एष नवाक्षरः शान्तिको मन्त्रः ॥६५॥

---

(1) शान्तम्- भ.
(2) आदिबीजानि- फ.
(3) संयुक्तम्- भ
(4) प्रथमाद्यं- फ.
(5) कलान्वितम्- फ
(6) एवं नवाक्षरं विदुः- क. ख. (पा). ग. घ च. छ. ज. ट. ठ ड. ढ. त. थ. द. ध. प. फ.

एतद्धै परमं[1] बीजं सर्वं[2]सिद्धिप्रदायकम् ।

[ पञ्चमः पौष्टिकमन्त्रः ]

परात्परं समुद्धृत्य चैन्द्रे चतुर्दशान्वितम्[3] ॥ ६६ ॥
कार्यकारणसंयुक्तं शक्तिजी[जीं]वसमन्वितम्[ता][4] ।

---

एतद्धै परमं बीजं एतत् नवाक्षरं परममित्युक्तं बीजं सर्वसिद्धिप्रदायकं समस्तसिद्धिप्रदं भवति । परात्परं समुद्धृत्य हकारमुध्दृत्य ऐन्द्रे चतुर्दशान्वितं इन्द्रवर्गस्य चतुर्दशं औकाराख्यं भवति; तेन औकारेण संयोजयेत् । एवं च हौ इति भवति ॥६६॥

कार्यकारणसंयुक्तं हौ इतीदं अनुस्वारसंयुक्तं चेत् हौं इत्यादि प्रासादबीजं भवति । शक्तिः जीवसमन्विता स इति व्यञ्जनाक्षरं जीवाभिधानअकारयुक्तं चेत् स इति । अथ पूर्वो सकारानन्तरं पुनरपि ईशे तृतीयकं ईशवर्गीयतृतीयाक्षरभूतसकारम् जीवसमन्वितं उद्धरेत् इति शेषः । एवं चेत् स इति भवति । उपरि पश्चात् द्वितीयजीवयुक् ईश

---

(1) एवं तत्परमं- फ.
(2) दिव्यं- ७.
(3) ऐन्द्रे चतुर्दशान्वितम्- क घ. झ. थ.
ऐन्द्रे चतुर्दलान्वितम्- ध.
क्षादिरुद्रगणान्वितम्- फ.
(4) शिवशक्तिसमन्वितम्- ७.
शक्तिबीजसमन्वितम्- क. ख छ ज. ट ठ ड. त. थ. द. ध. प फ.

ईशे[1] तृतीयकं चाथो[2]परि[3] द्वितीयजीव[4]युक्[5] ।६७।।

सप्तमान्तं[6] द्विसंयुक्तं[7] षष्ठान्तं[8] षट्कलान्वितम्[9] ।

---

वर्गीयद्वितीयाक्षरभूत ष इति व्यञ्जनं जीवाभिधान-अकारसहितम् उद्धरेदिति शेषः । एवं चेत् ष इति भवति ।। ६७ ।।

सप्तमान्तं सप्तमवर्गस्य अन्तिमवर्णव्यञ्जनात्मकं वकारम्, उद्धृत्य द्विसंयुक्तं पूर्वोद्धतशवर्गीयद्वितीयाक्षरभूतषकारेण संहितम्, कुर्यादिति शेषः। एवं चेत् ष्व इति भवति । षष्ठान्तं षष्ठवर्गस्य अंतिमवर्णभूतव्यञ्जनात्मक-मकारम्, उद्धृत्य षट्कलान्वितं षष्ठस्वरभूतेन ऊकारेण सहितम्, कुर्यादिति

(1) ईश- क
(2) चाधो- क्ष.
चाधौ- क. घ. छ. ट. त. थ. घ.
चादौ- फ.
(3) परे- क. घ. छे. ठ. ड. ढ. त. थ. द. ध प.
(4) बीज- थ. ध
(5) युत्- क.
भूतेन्द्रियप्रपञ्चादौ पञ्चाधनुत्रिबीजयक् - फ.
(6) सप्तमान्त- थ. प.
(7) समायुक्तं- ध.
द्विसं क्त- थ
(8) अष्टान्तं -थ.
(9) षट्कलायुतम्- ज. धं.
सप्तमं चाधिसंयुक्तं अष्टमं चाधिसंयुतम्- फ.

भूतान्तं तु[1] समुद्धृत्य वह्निं[2] तस्योपरि[3] न्यसेत् ।६८।

पञ्चमान्त[4]कलोपेतं
भान्तमेकारसंयुतम् ।

---

शेषः । एवं चेत् म् इति भवति । **भूतान्तं तु समुद्धृत्य** हकारमुद्धृत्य तु **तस्योपरि वह्निं न्यसेत्** तेन हकारेण वह्निबीजं रेफं योजयेत् । एवं च ह्र इति भवति ॥६८॥

**पञ्चमान्तकलोपेतं** पूर्वोद्धृतं ह्र इति बीजं षष्ठस्वरभूतेन ऊकारेण सहितं कुर्यात् । एव चेत् ह्रू इ भवति । **भान्तं** मकारं उद्धृत्य **एकारसंयुतं** एकारसहितं कुर्यात् । एवं चेत् मे इति भवति । **पञ्चपञ्चमम् आदिस्यात्** पञ्चमवर्गीयपञ्चमाक्षरभूतव्यञ्जनात्मकनकारः आदिपदाभिधानेन अकारेण सहितो भवति । एवं चेत् न इति भवति । **षष्ठांतं** षष्ठवर्गीयान्तिमाक्षरभूतव्यञ्जनात्मको मकारः आदि स्यादिति शेषः ।

---

(1) आद्यं चैव- फ

(2) वह्नि- क, ट.

(3) परि- क द.

(4) पञ्चमान्तं - झ.

पञ्चपञ्चममादि स्यात्[1]
षष्ठान्तं[2] सप्तमादिकम्[3] ॥ ६९ ॥

[ प्रासङ्गिकं सदाशिवसप्ताक्षरमन्त्रनिरूपणम् ]

[4]वह्निर्मा[मा] त्रादिसंयुक्तः[क्त]
वरुणाद्यं[न्त्यं] नमादियुक् ।

---

अकारेण युक्तो भवतीत्यर्थः । एवं चेत् म इति भवति । सप्तमादिक सप्तमवर्गीयाद्याक्षरभूतव्यंजनात्मकयकारः आदि स्यादिति शेषः । अकारयुक्तो भवतीत्यर्थः । एवं चेत् य इति भवति ॥६९॥

प्रसङ्गवशात् सदाशिवस्य सप्ताक्षरमन्त्रो निरूप्यते– नमादियुक् नम आदिप्रसादाभ्यां युक्तम्, वरुणान्त्यं वरुणबीजस्य समीपे वर्त-

---

(1) पञ्चमं आदिबीजं स्यात्– फ.

पञ्चपञ्चमदारि स्यात्- क.

पञ्चपञ्चममादिः स्यात्– ग. च ध.

(2) अष्टान्तं – फ.

(3) सप्तमाधिकम्– क. ढ.

प्रथमान्तकम्- फ.

(4) 'वह्निर्मात्रा' इत्यारभ्य 'एकाक्षरो मनुः' इत्यन्तो भागः– ग. च. झ. पुस्तकेष्वेव दृश्यते । अस्य संस्कृतकर्णाटकभाषयोः व्याख्या नोपलभ्यते ।

सप्तमाद्य[न्त्यं] त्वा[द्या]दियुक्तं
वातान्तं त्वादिसंयुतम् ॥ ७० ॥

सप्ताक्षरं बिन्दुयुक्तं
भवेदेकाक्षरो मनुः ॥

---

मानम् श इत्यक्षरम्, वह्निमात्रादिसंयुक्तं वह्निसंख्याकमात्रादिना युक्तम्, तृतीयस्वरात्मकेन इकारेण सहितम्। उद्धरेदिति शेषः। एवं चेत् हौं नम शि इति भवति। ततः सप्तमान्त्यं समववर्गस्य अवसाने वर्तमानं व इति वर्णम्, द्व्यादियुक्तं द्वितीयस्वरात्मकेन अकारेण सहितं उद्धरेदिति शेषः। एवं चेत् वा इति भवति। वातान्तं मारुतवर्गस्य समीपे वर्तमानं य वर्णं त्वादिसंयुतं आदिभूतेन अकारेण सहितम्। उद्धरेदिति शेषः। एवं चेत य इति भवति। एवं च आहृत्य हौं नमः शिवाय इति भवति। अत्र नमस् शब्दः सान्तो ग्राह्यः। इत्थं च हौं नमः शिवाय इति षड्बीजानि भवन्ति ॥ ७० ॥

सप्ताक्षरं महेश्वरसूत्रानुरोधेन सप्तमाक्षरं ओ वर्णम्, बिन्दुयुक्तं अनुस्वारसहितम् उद्धरेदिति शेषः। एवं चेत् ओं इति भवति। एकाक्षरो मनुः भवेत् अयं ओंकारः एकाक्षरमन्त्रो भवति। पूर्वोद्धृतानां षण्णां बीजानां आदौ इमं ओंकारं योजयेत्। एवं चेत् ओं हौं नमः शिवाय' इति सप्ताक्षरः सदाशिवमन्त्रो भवति ॥

[ पञ्चविधसदाशिवमन्त्रनिरूपणनिगमनम् ]

[1]बिन्दुनादसमायुक्तं दशबीजमिहोच्यते [2]।
एते[3] पञ्चविधाः प्रोक्ताः[4] मन्त्राः पञ्चाक्षरादयः ॥

---

बिन्दुनादसमायुक्तं प्रथमसकारादारभ्य सर्वाण्यप्येतन्मत्रबीजानि बिन्दुनादाख्येन अनुस्वारेण युक्तानि स्युः। एवं चेत् हौं सं सं पं मूं हूं मं नं मं यं इति भवति। इह अस्मिन् शुद्धाख्ये तन्त्रे दशबीजं उच्यते। अथ दशबीजात्मकसदाशिवमन्त्रः इत्युच्यते। अयं च पौष्टिकमन्त्रः। पञ्चाक्षरादयः पञ्चाक्षर-षडक्षर-अष्टाक्षर-नवाक्षर दशाक्षरभेदाः मोक्ष-अभिवृद्धि-काम्य-शांति-पौष्टिकप्रदाः पञ्चविधः पञ्चप्रकाराः एते मन्त्राः सदाशिवस्य मन्त्राः प्रोक्ताः कथिताः ॥

---

(1) एतद्दशाक्षरमन्त्रोद्धारे- ग. च. छ. पुस्तकेषु एवं पाठान्तरं दृश्यते-
ईशे वर्गे तुर्यमैन्द्रे चतुर्दळकलान्वितम् ।
कार्यकारणसंयुक्ता शक्तिरादिकलान्विता ॥
शक्तिमात्रादिसंयुक्ता मज्जामात्रादिसंयुता ।
सप्तमान्तसमायुक्तं षष्ठान्तं षष्ठबीजयुक् ॥ २ ॥
भूतान्तं च समुध्दृत्य क्ष[पं] च मान्तकलान्वितम् ।
वैश्वानरसमायुक्तं भान्तमेकारसंयुतम् ॥ ३ ॥
वरुणान्तं च मात्रादियुक्तं षष्ठान्तमादियुक् ।
सप्तमस्यादिबीजं च प्रथमस्वरसंयुतम् ॥ ४ ॥
नवाक्षरं बिन्दुयुक्तं दशवर्णमनुः स्मृतः ।
एते पञ्चविधा मन्त्राः प्रोक्ताः पञ्चाक्षरादयः ॥ ५ ॥
सदाशिव इति प्रोक्तः महेशं श्रुणु षण्मुख " इति ॥
" एवं दशाक्षरं प्रोक्तं सर्वैश्वर्यप्रदायकम् "- फ.

(2) महोच्यते- त.

(3) एवं - थ.

(4) प्रोक्तम्- ठ. फ.
पद्यार्धमिदम्- प. पुस्तके न वर्तते ।

[ महेशमन्त्रोद्धारक्रमनिरूपणम् ]

सदाशिवमिदं[स्त्वयं][1] प्रोक्त[क्तः] महेशं शृणु षण्मुख [2]।
महेशं [3] रुद्रमूर्तित्वात्[4] संहारेण समुद्धरेत् ॥ ७१ ॥

[ महेशमन्त्रत्रैविध्यम् ]

तस्य भेदः[5] त्रिधा ज्ञेयः[6] सृष्टिस्थितिलयास्तथा[7] ।

---

हे षण्मुख ! एतावत्पर्यंत मया अय सदाशिवस्तु प्रोक्तः अयं पञ्चप्रकारः सदाशिवमन्त्रः कथितः । इतः परं महेशं शृणु महेशमन्त्रं अवधारय । महेशं महेशमन्त्रम् रुद्रमूर्तित्वात् महेशस्य रुद्रमूर्तिस्वरूपत्वात् संहारेण संहारक्रमेण समुद्धरेत् ॥ ७१ ॥

तस्य भेदः महेशमन्त्राणां भेदः सृष्टिस्थितिलयास्तथा सृष्टिः स्थितिः लयः इति त्रिधा ज्ञेयः त्रिप्रकारो ज्ञातव्यः । इदानीं सृष्टिमन्त्रोद्धारो निरूप्यते– भूमौ पृथिवीवर्गे तृतीयं तृतीयाक्षरं हकारम्

---

(1) व इति– क. घ. छ. ट. ठ त थ. द. ध.

(2) महेश मन्त्रमिदम्– ड. प.

(3) महेशः– ग. च. झ.

(4) मूर्तत्वात्– ट. त. थ.

(5) भेदम्– क घ. छ. ज. ट. ठ. डि. ढ़ी त. थ. द. ध. प.

(6) ज्ञेयम्– क. घ. छ. ट. ठ. ड. ढ. त. थ द ध. प. फ

(7) लयं तथा– क. ख.

लयस्तथा– ग. च ज.

[ तत्र प्रथमः सृष्टिमन्त्रः ]

भूमौ[1] तृतीयमुद्धृत्य चान्तरिक्षान्तबिन्दुयुक् ॥ ७२ ॥

तोयादिरभ्रान्तबिन्दु-
युक्तो भूमौ नवाक्षरम्[2] ।
नभोन्तबिन्दुसंयुक्तं
अम्बरे तु षडक्षरम् ॥ ७३ ॥

---

उद्धृत्यं उद्धरणं कृत्वा, अन्तरिक्षान्तबिन्दुयुक् च व्योमवर्गीयान्तिमाक्षरभूतेन अकारेण अनुस्वारेण च सहितं कुर्यादिति शेषः । एवं चेत् हं इति भवति ॥ ७२ ॥

ततः तोयादि अब्वर्गस्य आद्यक्षरभूतमकारः अभ्रान्तबिन्दुयुक्तः व्योमवर्गीयान्तिमाक्षरभूतेन अकारेण अनुस्वारेण च सहितः उद्धर्तव्यः इति शेषः । एवं चेत् मं इति भवति । भूमौ पृथिवीवर्गे नवाक्षरं नवमाक्षरभूतरेफः नभोन्तबिन्दुसंयुक्तं व्योमवर्गीयांतिमाक्षरभूतेन अकारेण अनुस्वारेण च सहितः उद्धर्तव्यः इति शेषः । एव चेत् रं इति भवति । अम्बरे तु व्योमवर्गे तु षडक्षरं षष्ठाक्षरभूतः एकारः ॥७३॥

---

(1) भौमं– क्ष.

(2) नवार्णकम्– ख.

[1]आधाराधेयसंयुक्तं[2] सृष्टिबीज[3]मिति स्मृतम्[4] ।

[ द्वितीयः स्थितिमन्त्रः ]

[5]पृथिव्यां तु तृतीयार्णं शान्त[खा]बिन्दुसमन्वितम् ।। ७४ ॥

---

आधारधेयसंयुक्तं बिन्दुसहितः उद्धर्तव्यः । एवं चेत् एं इति भवति । सृष्टिबीजं इति स्मृतं हं मं रं एं इति बीजानि आहृत्य सृष्टिमन्त्रो भवति । पृथिव्यां तु पृथिवीवर्गे तृतीयार्णं तृतीयाक्षरभूतहकारः खान्तबिन्दुसमन्वितम् व्योमवर्गीयान्तिमवर्णभूतेन अकारेण अनुस्वारेण च सहितः, उ र्तव्यः इति शेषः । एवं चेत् हं इति भवति ॥

---

(1) एतत्सृष्टिबीजोध्दारे- ग. च. झ पुस्तकेषु पाठान्तरं वर्तते । तच्चैवम्-
"महेशं रुद्रमूर्तित्वात् संहारेण समुद्धरेत् ।
तस्य भेदः त्रिधा ज्ञेयः सृष्टिस्थितिलयास्तथा ॥
भूमौ तृतीयमुध्दृत्य सलिलाद्यसमन्वितम् ।
भूमौ नवार्णकं विद्यात् अम्बरे तु षडक्षरम् ।
आधाराधेयसंयुक्तं सृष्टिबीजमिहोच्यते ॥
इति ।

(2) संयुतं- क.

(3) रूप- फ.

(4) मिहोच्यते- ख. फ.

(5) अस्यार्धस्य स्थाने-
पृथिव्यां तु तृतीयं स्यात् व्योमान्तेन समन्वितम् ।
शक्तिं तस्योपरि न्यस्य तद्वर्गे तुर्यकं भवेत् ॥- ग. च. झ.

तद्वर्गे तुर्यमुद्धृत्य सुरमार्गान्तबिन्दुयुक् ।
लयाद्यमनलं[1] चैव पार्थिवान्तेन[2] संयुतम् ॥ ७५ ॥

व्योम[3]षष्ठ[4]समायुक्तं कार्यकारणसंयुतम् ।

---

तद्वर्गे पृथिवीवर्गे तुर्यं चतुर्थाक्षरभूतसकारम् उद्धृत्य उद्धरणं कृत्वा सुरमार्गान्तबिन्दुयुक् व्योमवर्गीयान्तिमवर्णभूतेन अकारेण अनुस्वारेण च सहितं कुर्यादिति शेषः। एवं चेत् सं इति भवति। लयाद्यं लयमार्गे प्रथमाक्षरभूतक्षकारं अनलं चैव वह्निबीजं रेफम् पार्थिवान्तेन संयुतं पृथिवीवर्गस्यांतिमवर्णभूतं यकारं च उद्धृत्य, एकैकमपि सुरमार्गान्तबिन्दुयुक् अकारेण अनुस्वारेण च सहितं कुर्यात्। एवं चेत् क्षं रं यं इति भवति ॥ ७५ ॥

व्योमषष्ठसमायुक्तं व्योमवर्गस्य षष्ठवर्णभूतं एकारं पूर्वोद्धृतयकारोपरि योजयेत्। इमं च एकारं कार्यकारणसंयुतं अनुस्वारसहितं कुर्यात्।

---

(1) लयाद्यमनिलं– ग. च. ज.

प्रलयाद्यवनिः– फ.

लयाद्यं चानलं– थ.

(2) पार्थिवं तेन– थ. प.

(3) व्योमे– क. ख. ग. च. छ. ज. ट. ठ. ढ. थ. द. ध. प.

(4) षष्टि– ध

[ तृतीयः संहारमन्त्रः ]

स्थितिबीजमिदं[1] प्रोक्तं संहारश्चाधुनोच्यते ॥ ७६ ॥
महीवर्गे[3] तृतीयार्णं[4] व्योमान्तेन समन्वितम्[5] ।
शिवशक्तिसमायुक्तं पृथिव्यादिं[6] समुद्धरेत् ॥ ७७ ॥

---

एवं चेत् ए इति भवति । एवं च पूर्वोद्धृतानि बीजानि आहृत्य ह सं सं रं यं एम् इति भवति । स्थितिबीजमिदं प्रोक्तं इत्थं स्थितिमन्त्रः कथितम् । संहारश्चाधुनोच्यते इदानीं संहारमन्त्रोद्धरण-मुच्यते ॥ ७६ ॥

इदानीं संहारमन्त्रस्योद्धारः निरूप्यते- महीवर्गे पृथिवीवर्गे तृतीयार्णं तृतीयाक्षरं हकारं व्योमान्तेन समन्वितम् अकारेण संयुक्तम्, शिवशक्तिसमायुक्तं अनुस्वारेण सहितं च समुद्धरेत् उद्धरणं कुर्यात् । एवं चेत् हं इति भवति । पृथिव्यादिं भूवर्गस्य आदिमं बीजं क्षकारम् व्योमान्तेन समन्वितं शिवशक्तिसमायुक्तं च समुद्धरेत् अकारेण अनुस्वारेण च सहितं उद्धरेत् । एवं चेत् क्षं इति भवति ॥७७॥

---

(1) मिति- फ
(2) सहारम- ग च
संहारं चा- क. छ. ज ट. ढ. थ द. ध प.
(3) महीवर्गम्- प
महीवर्गः- फ
(4) तृतीयं स्यात्- क ख. ग घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
(5) समायुतं- क. ख. ग. घ च. छ. ज. ट. ठ ढ. त. थ. द. ध.
समायुतं- झ.
(6) पृथिव्यादिं- क. छ. ट. द ध.
पृथिव्यां तु- ढ.

द्वितीयाद्यं समुद्धृत्य तेजो वै पार्थिवान्तकम्[1] ।
[2]अन्तरिक्षान्तसंयुक्तं कार्यकारणसंयुतम् ॥ ७८ ॥

व्योम्नः[3] षड्वर्णकं बिन्दुं[4] सहारं [र] इति कीर्तितम् [तः] ।

---

द्वितीयाद्यं द्वितीयवर्गस्य प्रथमाक्षरं मकारम् तेजो वै अग्निबीजं रेफम् पार्थिवान्तकं पृथिवीवर्गस्य अन्तिमाक्षरं यकारं च समुद्धृत्य उद्धरणं कृत्वा एकैकमपि अन्तरिक्षान्तसंयुक्तं अकारेण सहितं कार्यकारणसंयुतं अनुस्वारसहितं च कुर्यादिति शेषः । एवं चेत् मं रं यं इति भवति ॥ ७८ ॥

व्योम्नः षड्वर्णकं व्योमवर्गषष्ठाक्षरं एकारं उद्धृत्य तस्योपरि बिन्दुं अनुस्वारं योजयेत् । एवं चेत् एं इति भवति । उद्धृतानीमानि

(1) कार्यकारणसंयुक्तं जलाद्यं शान्तबिन्दुयुक्- ग. च. झ.

(2) पद्यार्धमिदं- क. ख. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ. पुस्तकेषु न दृश्यते ।

(3) व्योमे - क. ख. ग. घ च. छ. ज. झ. ट. ठ. ड. ढ. द. प. व्योम- त. थ.

(4) बिन्दु- क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. ध. प. फ.

(5) रं चेति- क. ख. छ. ज. ट. ठ. ढ. त थ द ध. प.

[ शक्तिमन्त्रपञ्चकोद्धारक्रमनिरूपणम् ]

महेशबीज[1]माख्यातं शक्तिबीजमथ[2] शृणु ॥ ७९ ॥

[ प्रथमः शक्तिमन्त्रः ]

शक्तिबीजं समुद्धृत्य द्विकला[3]वह्निसंयुतम् ।
बिन्दुनादसमायुक्तं शक्ति[4]बीजमिदं[5] परम् ॥ ८० ॥

---

बीजान्याहृत्य हं क्षं मं रं यं एं इति भवति। इति संहारः कीर्तितः एवं संहारमन्त्रोद्धारः निरूपितः। महेशबीज आख्यातं महेशमन्त्रोद्धारः कथितः। अथ शक्तिबीज शृणु इतः परं शक्तिमन्त्रोद्धारं अवधारय ॥ ७९ ॥

इतः परं शक्तिबीजानि निरूप्यन्ते- शक्तिबीजं शक्तिबीजाख्यसकारम्, द्विकलावह्निसंयुतं द्वितीयस्वरभूतेन आकारेण अग्निबीजाख्यरेफेण च सहितम्, समुद्धृत्य उद्धरणम् कृत्वा बिन्दुनादसमायुक्तं अनुस्वारसहितम् कुर्यादिति शेषः। एवं चेत् स्रां इति भवति। इदं परं शक्तिबीजम् इदम् पराशक्तिबीजभूतं सर्वोत्कृष्टं शक्तिबीजं भवति ॥८०॥

---

(1) महेशमेव– क. ख. ग घ च. छ. ज. झ. ट. ठ. ढ. त. थ ध. फ.

(2) मतः– ध.

(3) धिकृतिः– ख. ग घ च. छ. ज. झ. ठ. ड. ढ. त. द. प.
पिङ्गला– फ.
त्रिकला– क. ट. थ

(4) शिव– ग. च

(5) मितः– फ.

[ द्वितीयः शक्तिमन्त्रः ]

प्रथमा[1] शक्तिरित्युक्ता[2] द्वितीया[3] शक्तिरुच्यते ।
नादाद्यं[4] तु समुद्धृत्य[5] षष्ठमायासमन्वितम्[6] ॥ ८१ ॥

बिन्दुनादसमायुक्तं द्वितीया[7] शक्तिरीरिता[8] ।

---

इति प्रथमा शक्तिरुक्ता। उक्तरीत्या प्रथमशक्तिमन्त्रोद्धारो निरूपितः। अथ द्वितीया शक्तिरुच्यते इतः परं द्वितीयशक्तिबीजोद्धारः कथ्यते। नादाद्यं तु हकारस्य आदिभूतं सकारं षष्ठमायासमन्वितं षष्ठाख्यरेफेण मायाख्येन ईकारेण च सहितं समुद्धृत्य उद्धारं कृत्वा ॥८१॥

बिन्दुनादसमायुक्तं अनुस्वारसहितम्, कुर्यादिति शेषः। एवं चेत् स्रीं इति द्वितीयशक्तिमन्त्रो भवति। द्वितीया शक्तिरीरिता इत्थं द्वितीयशक्तिमन्त्रबीजं निरूपितम्। तत्त्वान्ताद्यं हकारस्यादिभूतं सकारम्,

---

(1) प्रथमं- छ. फ.
(2) रित्युक्तं- क. घ. छ ट. ठ ड ढ. त. थ. ध प. फ
(3) द्वितीय- छ.
(4) नादान्तं- ध.
(5) नादाद्यं तु षष्ठ तु- फ.
(6) षष्ठं मायासमन्वितम्- क. ख. ग घ. च. छ. ज. ट ठ. ड. ढ. त. थ. द ध. प फ.
(7) द्वितीयं- छ.
(8) रुच्यते- क. ख. (पा). ग. घ. च. छ. ज ट. ठ. ड. ढ. ण त थ. द. ध. प. फ.

[ तृतीयः शक्तिमन्त्रः ]

तत्त्वान्ताद्यं धरावह्निं[1] बिन्दुनादसमन्वितम्[2] ।[3] ८२ ॥

[ चतुर्थः शक्तिमन्त्रः ]

तृतीया[4] शक्तिरित्युक्ता[5] चतुर्थी शक्तिरुच्यते[6] ।

---

उद्धृत्येति शेषः । धरावह्निबिन्दुनादसमन्वितं धराख्येन ऊकारेण बिन्दु-नादाख्येन अनुस्वारेण च सहितं कुर्यात् । एवं चेत् सूम् इति भवति ॥ ८२ ॥

तृतीया शक्तिः इत्युक्ता- इत्थंतृतीयशक्तिमन्त्रोद्धारः निरूपितः । चतुर्थी शक्तिरुच्यते चतुर्थशक्तिबीजोद्धारः निरूप्यते । जीवाद्यं जीवाख्यहकार-

---

(1) तत्त्वाद्निष्टकलावहि- फ.
तत्त्वाद्निष्टकला वह्निः- झ.

(2) समायुतम्- क ख. घ. छ. झ. ट. ठ ड. ढ. त, थ. द ध प.

(3) पद्यमिदं ज पुस्तके न दृश्यते ।

(4) तृतीयं- क. प. फ.
तृतीयः- ङ. द.

(5) रित्युक्तम्- क. घ. छ. ट. ठ. ड. त थ. द. प, फ.

(6) तच्चेदं श्रृणु षण्मुख- क.
चतुर्थं शक्तिरुच्यते- फ.
जीवाद्यं वह्निसंयुतम्- झ.

जीवाद्यं द्वादशकलावैश्वानरसमन्वितम्[1] ॥ ८३ ॥

[ पञ्चमः शक्तिमन्त्रः ]

[2]बिन्दुनादसमायुक्तं[3] चतुर्थी[4]शक्तिरीरिता[5] ।

---

स्यादिभूतं सकारम् द्वादशकलावैश्वानरसमन्वितं द्वादशस्वरात्मकेन ऐकारेण वह्न्याख्यरेफेण च सहितं उद्धृत्येति शेषः ॥ ८३ ॥

**बिन्दुनादसमायुक्तं** अनुस्वारेण सहितम् कुर्यादिति शेषः । एवं चेत् स्रैं इति शक्तिबीजं भवति । **चतुर्थी शक्तिरीरिता** इत्थं चतुर्थशक्तिबीजोद्धारः निरूपितः । **भूतान्ताद्यं** भूतान्तान्ताख्यहकारस्य

---

(1) जीवादयम् वह्निसंयुक्त कलाद्वादशभेदकम् - क.
जीवाद्यम् वह्निसंयुक्त कलाद्वादशभेदयम् - ढ त.
कलाद्वादशकाभेदयम् बिन्दुनादसमायुक्तं - ख. ट. ड.
जीवादयं वह्निसंयुक्तं कलाद्वादशसंयुतम् - घ.
चतुर्थी शक्तिबीजं स्यात् भूतादयम् वह्निसंयुतम् - ज.

(2) एतदर्धस्थाने -
चतुर्थी शक्तिरित्युक्ता भूताद्यं वह्निसंयुतम् - ख. ट ड.
चतुर्दशकलोपेतं बिन्दुनादसमन्वितम् - ज.

(3) समायुतं - द.

(4) चतुर्थं - क. ढ. प.

(5) रुच्यते - क. ढ. त थ. घ. प.
रित्युक्तम् - ढ. द.

भूतान्ताद्यं समुद्धृत्य चतुर्दशकलान्वितम्[1] ॥ ८४ ॥

वह्निबिन्दुसमायुक्तं पञ्चमी शक्तिरीरिता[2] ।

( शक्तिमन्त्रोद्धारनिगमनम् ]

एतेषां शक्तिबीजानां शिवाङ्गमिव चोद्धृतम् ॥ ८५ ॥

---

आदिभूतं सकारम् चतुर्दशकलान्वितं औकारेण सहितम् समुद्धृत्य उद्धारं कृत्वा ॥ ८४ ॥

वह्निबिन्दुसमायुक्तं रेफेण अनुस्वारेण च सहितम् कुर्यात् । एवं चेत् सौं इति शक्तिबीजं भवति । पञ्चमी शक्तिरीरिता इत्थं पञ्चमशक्तिबीजोद्धारो निरूपितः । एतेषां शक्तिबीजानां पूर्वोक्तपञ्चशक्तिबीजानामपि शिवाङ्गमिव शिवाङ्गबीजानामिव च उक्तं उद्धरणं भवति ॥८५॥

---

(1) चतुर्दशकलोपेतं बिन्दुनादसमन्वितम्– घ. छ. ट. ड. ढ.
भूताद्यं वह्निसंयुक्तं चतुर्दशकलायुतम्– प.
भूताद्यं वह्निसंयुक्त चतुर्दशकलान्वितम्– क थ द. ध

(2) पञ्चमी शक्तिरित्युक्ता शिवाङ्गमिति चोध्दृतम्– ड.
पञ्चमशक्तिरित्युक्त शिवाङ्गमिव चोध्दृतम्– छ ज, ट. ठ. ढ. त ध
पञ्चमाशक्तिरित्युक्तं शिवाङ्गमिति चोध्दृतम्– घ त
बिन्दुनादसमायुक्तं पञ्चमी शक्तिरुच्यते– थ. ध.
वह्निबिन्दुसमायुक्तं पञ्चमी शक्तिरियुक्तम्– द.

[ पञ्चशक्त्यधिदेवताः ]

एतासां[2] पञ्चशक्तीनां उमा[3]शक्त्यादिरेव च[1] ।
[5]उमाम्बिका गणानी च ई[त्वी]श्वरी च मनोन्मनी ॥८६॥

[ आसां परस्परं अंशांशिभावाः ]

एतेषां पञ्चतत्त्वानां आदिशक्तिरुमैव च ।

---

एतासां पञ्चशक्तीनां एतेषां पञ्चशक्तिबीजानां उमाशक्त्यादिरेव च उमादयः शक्तयः क्रमेण देवताः भवन्ति । उमाऽम्बिका गणानी च त्वीश्वरी च मनोन्मनी उमाशक्त्यादयस्तु उमा, अम्बिका गणानी, ईश्वरी, मनोन्मनी इत्येवंरूपाः ॥८६॥

एतेषां पञ्चतत्त्वानां पूर्वोक्तपञ्चशक्तीनां उमैव चादिशक्तिः उमाशक्तिरेव प्रथमशक्तिः भवति । एवं उमादिशक्तिवत् मनोन्मन्याः

---

(1) पद्यमिदं ङ. द पुस्तकयोः नदृश्यते ।

(2) एतेषां- क. ग छ. ज. ट थ. ध.
ते ां- ढ.
एते वै- क.

(3) शक्तीनां पञ्चमुमा- क.

(4) शक्त्या च देव च- ध.

(5) ' उमाऽम्बिका ' इत्यारभ्य ' अंश एव प्रकीर्त्यते ' इत्यन्तो भागः क. पुस्तके न वर्तते ।

[1]मनोन्मन्या:[2] क्रमेणैवं अंश एव प्रकीर्त्यते[3] ॥ ८७ ॥

[ तत्र गौरीबीजोद्धारक्रमः ]

गणवर्णं[4] समुद्धृत्य वह्निमायासमन्वितम् ।
बिन्दुनादसमायुक्तं गौरीबीजमिदं[5] परम् ॥ ८८ ॥

---

क्रमेणैव मनोन्मनी सकाशात् क्रमश एव अंशः प्रकीर्त्यते दशमांशात्मना गौर्यादिशक्तिः जायते ; इति संप्रदायः कथ्यते ॥८७॥

गणवर्णं गकारम् वह्निमायासमन्वितं अग्निबीजेन रेफेण मायाबीजेन ईकारेण च सहितम्, समुद्धृत्य उद्धारं कृत्वा, बिन्दुनादसमायुक्तं अनुस्वारेण सहितम् कुर्यादिति शेषः । एवं चेत् ग्रीं इति भवति । इदं परं गौरीबीजम् इदं उत्कृष्टं गौरीबीजमित्युच्यते ॥८८॥

---

(1) पद्यार्धमिदं ज. पुस्तके न वर्तते ।

(2) मनोन्मनी- फ.

(3) मन्त्रमेवं प्रकीर्तितम्- फ.

वंश एव प्रकीर्त्यते- ढ. द. प.

(4) वह्निर्गणं- क. घ. छ. ट. ठ. त. थ.

वह्नेर्गणं- ख. फ.

(5) मितः- फ.

[ बीजान्तरोद्धारक्रमः ]

अन्यासां[1] चैव शक्तीनां स्वनामाद्यक्षरेण तु[2] ।
कार्यकारणसंयुक्तं सर्वासां[3] शक्तिरुच्यते ॥ ८९ ॥

[ लिङ्गे मन्त्रमूर्त्योर्न्यासक्रमनिरूपणम् ]

मन्त्र[4] एवं[5] समाख्यातः[6] मन्त्रन्यासमथ[7] शृणु[8] ॥ ९० ॥

---

अन्यासां शक्तीनां चैव इतरासां समस्तशक्तीनामपि स्वनामाद्यक्षरेण तु स्वनामधेयप्रथमाक्षरेण सह गौरीबीजवत् रेफं ईकारं च समुद्धृत्य कार्यकारणसंयुक्तं अनुस्वारसहितम् कुर्यादिति शेषः । एवं चेत् सर्वासां शक्तिरुच्यते सर्वासां देवतानां शक्तिबीजानि उक्तानि भवन्ति ॥ ८९ ॥

एवं उक्तप्रकारेण मन्त्रः समाख्यातः मन्त्रोद्धारः कथितः । अथ मन्त्रोद्धारनिरूपणानन्तरं मन्त्रन्यासं शृणु मन्त्रविन्यासं अवधारय ।

---

(1) अन्येषां– क. घ. छ. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.
(2) च– झ.
(3) सर्वेषां– कं. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प. फ
(4) मन्त्रं– क. ग. घ. छ ज. ट. ठ ड. ढ. त. थ. द. ध प. मन्त्रेण– फ.
(5) एव– क ग. घ. छ. ज. ड. ढ. त द. प.
(6) समाख्यातं– क. घ. छ. ट. ठ. ड. त. थ. द. ध.
(7) तन्त्रन्यासमतः– ट.
(8) मथोच्यते– ध.

लिङ्गस्य[1] स्थापनाकाले[2] तत्त्वमन्त्रांश्च[3] विन्यसेत् ॥ ९० ॥
कुम्भेष्वन्तर्गतान्[4] मन्त्रान्[5] लिङ्गवत्पूरितान्[6] बहिः ।
तयोर्योगे[7] क्रियावस्था सुप्रतिष्ठेति[8] कीर्तिता[9] ॥ ९१ ॥

---

हे षण्मुखेति शेषः । **लिङ्गस्य** शिवलिङ्गस्य **स्थापनाकाले** स्थापनावसरे तत्र **तत्त्वमन्त्रांश्च विन्यसेत्** तत्त्वानि मन्त्रांश्च विन्यसेत् ॥ ९० ॥

**कुम्भेषु** स्थापितकुम्भेषु **अन्तर्गतान्** कुम्भान्तर्विन्यस्तान् **मन्त्रान्** मनूंश्च **लिङ्गवत्** लिङ्गः इव **बहिः** कुम्भबाह्येऽपि **पूरितान्** न्यासीकृतान् कुर्यात् । **तयोर्योगे क्रियावस्था** लिङ्गकुंभयोर्योगे सङ्गतौ या क्रियावस्था सैव **सुप्रतिष्ठेति कीर्तिता** सुप्रतिष्ठेति कथिता । एवं प्रतिष्ठ कुर्यात् ॥ ९१ ॥

---

(1) अङ्गस्य- ख.
लिङ्ग- फ.
(2) स्थापने काले- ग. च. ज.
(3) तत्त्वमन्त्रस्य- ट.
तत्त्वमन्त्राश्च- क ढ. प
तत्त्वमन्त्रे च- फ.
(4) अन्तर्गतान्- क द
अन्तर्गता- झ.
(5) मन्त्राः- झ.
(6) त्स्फूरितान्- क.
त्पूरिताः- झ.
त्परिपूरितान्- ग. च.
त्पजितान्- ध.
(7) र्योग- ट. ढ प
(8) सा प्रतिष्ठेति- ग. च. ज.
(9) कीर्तिताः- क घ. छ ठ. ढ. त द
कीर्तितम्- ट.

प्राणप्रकृतियोगं तु ज्ञात्वा स्थापनमाचरेत् ।
प्राणो[1] मन्त्र[2] इति प्रोक्तः[3] प्रकृतिमूर्तिरीरिता[4] ॥ ९२ ॥

मन्त्रमूर्तिसु[5]संयोगः[6] शिव[7]सांनिध्यकारणम् ।

---

प्राणप्रकृतियोगं तु मन्त्रमूर्तिसंबन्धं तु ज्ञात्वा विदित्वा स्थापनमाचरेत् प्रतिष्ठां कुर्यात् । प्राण इत्युक्ते मन्त्रः इत्यर्थः; प्रकृतिरित्युक्ते मूर्तिरित्यर्थः ॥ ९२ ॥

मन्त्रमूर्तिसुसंयोगः मन्त्राणां मूर्तिनां च संयोगः शिवसांनिध्यकारणं शिवसान्निध्यनिमित्तं भवति । तस्माद्वै तत्कारणाद्वै मन्त्र-

---

(1) प्राणं- क. छ. ट. ठ. त द. ष.

(2) मन्त्रं- क. ग. घ. च. छ. ज. ट. ठ. ड. त. ध, द. ष.

(3) प्रोक्त- क. ग. घ. च. छ. ज, ट ठ. ड. ढ. त. थ. द. ध.प.फ.

(4) प्रकृतिं मूर्तिरुच्यते- ग. ज. थ
प्रकृतिर्मूर्तिरुच्यते- क. घ. च छ ट. ठ. ड. ढ त. द. ध. प.
पञ्चप्रकृतिमूर्तयः- फ.

(5) मूर्तिषु- थ.
मूर्तिस्तु- ड प.

(6) सयोगे- झ
संयोग- क. घ. छ. ज ट. ठ. ड त द.
संयोगाः- ध.
स्वसंयोगात्- फ.

(7) देव- फ.

तस्माद्वै मन्त्रमूर्तीश्च[1] लिङ्गमध्ये तु[3] विन्यसेत् ॥ ९३ ॥

[ तत्र प्रासादमन्त्रन्यासविधिः ]

[4]मूर्ध्नि[5] प्रविन्यसेत् शुद्धं मूलं[6] वै[7] सूत्रमध्यके[8] ।

---

मूर्तींश्च मन्त्रांश्च मूर्ताश्च लिङ्गमध्ये तु विन्यसेत् शिवलिङ्गमध्ये न्यासं कुर्यात् ॥ ९३ ॥

शिवलिङ्गे पञ्चप्रासादमन्त्राणां न्यासप्रकारः कथ्यते- मूर्ध्नि शिव-लिङ्गोद्धारस्य सूत्रसंज्ञया प्रतिष्ठितलिङ्गस्य उद्भवलिङ्गस्य च मस्तके शुद्धं ह इति शुद्धप्रासादमन्त्रं प्रविन्यसेत् न्यासं कुर्यात्। सूत्रमध्यके 'लिङ्गोद्धारार्थं चतुर्विंशदंशं भवेल्लिङ्गतुङ्गम्' इति सकलाधिकारे मध्यसूत्रस्य

---

(1) मूर्ति च– झ.
मूर्तिश्च– क. घ. छ ट ठ. ड. ढ. त. प. फ.

(2) अङ्ग– ख.

(3) मध्यके– क. ख घ. छ. ट. ठ. ड त. थ. द ध.
मध्यगे– ग च.

(4) 'मर्ध्नि' इत्यारभ्य 'विचक्षणः–' इत्यन्तभागस्य स्थाने 'क' पुस्तके–
"शुद्ध मूल च मध्ये तु तत्त्वं सव्ये तु विन्यसेत् ।
मूर्तवामे तु विन्यस्य आत्मानं सूत्रमूलके ॥" इति पाठः वर्तते ॥

(5) मूर्तः– ढ. प.

(6) मूल– ढ. प.

(7) स्यात्– ख. घ छ. ज ट. ड. ढ.

(8) मध्यमे– झ.

तत्त्वं तु दक्षिणे[1] प्रोक्तं आदिं[2] वामे तु विन्यसेत् ॥ ९४ ॥

[ सदाशिवमन्त्रन्यासविधि ]

आत्मानं सूत्रमूले तु[3] विन्यसेच्च[4] विचक्षणः ।

---

चतुर्विंशल्लिङ्गोद्धृतिलिङ्गदीर्घं कुर्यात् इति कथितम् । तस्मात् मध्यसूत्रे न्याससंज्ञा कथिता । लिङ्गद्विपङ्क्तेः चतुष्कोष्ठानां अधोभूतोर्ध्वपट्टिकारेखाया उपरिभूत-आज्यप्रासारिकरेखायाः स्थाने मूलं हौं इति कथितमूलप्रासादं प्रविन्यसेत् न्यासं कुर्यात् । तत्त्वं तु हं इति कथितं तत्त्वप्रासादमन्त्रं दक्षिणे द्विपंक्तिमध्यदक्षिणस्थाने प्रोक्तं विन्यसनीयमिति कथितम् । वामे तु द्विपंक्तिमध्यस्य वामस्थाने आदिं हौं इति कथितं आदिप्रासादमन्त्रं विन्यसेत् न्यासं कुर्यात् ।।९४।।

सूत्रमूले तु ऊर्ध्वपट्टिकायाः आज्यप्रासारिकायाः मध्यसूत्रमूले आत्मानं हंस इति कथितं आत्मप्रासादमन्त्रम् विचक्षणः मन्त्रविन्यासविज्ञः विन्यसेच्च न्यासं कुर्यात् । हे सुब्रह्मण्य ! मन्त्रन्यासः प्रासा-

---

(1) त्रिविधं- क्ष
दक्षिणं- ठ.

(2) आदि- क. ख. घ. छ ज. झ. ट. ठ. ड. ढ. त. थ. द. प. फ.

(3) च- ग. च. क्ष.

(4) स्तु- क ख. छ ज. ट. ड. ढ. त. थ. द ध. प.

मन्त्रन्यासो[1] मया[2] प्रोक्तः[3] तत्त्वन्यासमथ[4] शृणु[5] ॥ ९५ ॥

[ अमूर्तसादाख्यन्यासविधिः ]

कर्मेशं पुरतो[6] न्यस्येत्[7] कर्तृ सव्ये च[8] विन्यसेत्[9] ।

---

दमन्त्राणां तत्तत्स्थाने विन्यासः मया प्रोक्तः ईश्वरेण मया अभिहितः । अथ प्रासादमन्त्रन्यासश्रवणानन्तरम् , तत्त्वन्यासं सदाशिवतत्त्वन्यासं शृणु अवधारय ॥९५॥

इदानीं तत्तत्स्थानेषु सदाशिवतत्त्वन्यासं निरूपयति - कर्मेश- मिति । कर्मेशं कर्मसादाख्यतत्त्वम्, पुरतः सूत्रमूले न्यस्येत् न्यासं कुर्यात् । कर्तृ कर्तृसादाख्यतत्त्वम् सव्ये च दक्षिणभागे च विन्य

---

(1) न्यासं- क ग. च. छ. ज. ट. ठ डः त थ. द. ध. प.फ.
(2) इ - क. ग. च. छ ज. ट. ठ. ङ त. थ. द. ध. प.
अयं- झ.
इति- फ.
(3) प्रोक्तं क. ग ध. छे ज. ट. ठ ड. ढ त. थ. द. ध.
(4) मिह- थ.
(5) मथोच्यते- क. ग घ. च. छ. ज. ठ. ढ. त. थ. द. ध. फ.
(6) पूर्वतो- ङ. प.
(7) न्यस्य- क. ख. ग. घ. च छ. ज. ट ठ ङ. ढ. त. थ. द. ध. फ
(8) कर्तृपक्षे प्र- ध.
कर्तुः- सव्ये तु- ज. प.
कर्तृसव्ये तु- क. ख ग. घ. ट. ठ. ड. ढ. त. थ. द. ध.
(9) दक्षिणे- झ.

[ शिवसादाख्यन्यासविधिः ]

मूर्तं च[1] पश्चिमे[2] न्यस्येत्[3] अमूर्तं[4] चोत्तरे[5] न्यसेत्[6] ॥ ९६ ॥
ऊर्ध्वं तु शिवसादाख्य पञ्चतत्त्वानि विन्यसेत्[7] ।

---

सेत् विन्यासं कुर्यात् । मूर्तं च मूर्तिसादाख्यतत्त्वं च पश्चिमे पश्चिमभागे न्यस्येत् न्यासं कुर्यात् । अमूर्तं अमूर्तसादाख्यतत्वं उत्तरे उत्तरभागे न्यसेत् न्यासं कुर्यात् ॥ ९६ ॥

शिवसादाख्यं शिवसादाख्यतत्वम् ऊर्ध्वे तु ऊर्ध्वभागे न्यसेत् इति शेषः। पञ्चतत्त्वानि सदाशिवस्य पञ्चसादाख्यतत्वानि विन्यसेत्

---

(1) मूर्तिं वै- क. ट. ठ. ढ त. थ. द.
मूर्तिं च- ध फ.
मुर्तंचैवा- ध.

(2) चापरे- क. घ ट ठ ड. ढ. त थ ध.

(3) न्यस्य- क. ख घ ट. ठ. ढ. त. थ. ध.

(4) तत्त्वमूात- क घ. ट. ठ. त. थ. ध.

त्वमूर्ति- ख

(5) इतरे- क घ. ट. ठं. त. थ. ध.

(6) मूर्तिं वैं चापरे न्यस्य त्वमूर्तिमितरें न्यसेत्- ग. च. ज.

(7) विन्यसेत्- क.

[ देवस्य ध्यानावाहने ]

पञ्चमूर्तिमयं[1] देवं सर्वकारणकारणम् ॥ ९७ ॥

अष्टत्रिंशत्कलोपेतं[2] ध्यात्वा तु[3] सकलीकृतम्[4] ।
आवाहयेत्[5] ततो देवं पञ्चाक्षरविधानतः[6] ॥ ९८ ॥

---

एवं प्रकारेण न्यसेत् । पञ्चमूर्तिमयं कर्मेशादिपञ्चमूर्तीनां स्वरूपम् देवम् सर्वकारणकारणं कारणभूतबिन्दुमायाप्रधानानां निमित्तभूतम् ॥९७॥

अष्टत्रिंशत्कलोपेतं अष्टाधिकया त्रिंशत्कलया सहितम् सकलीकृतं सकलभूतम् देवं परमेश्वरं ध्यात्वा तु हृदि विचिन्त्य तु ततः ध्यानानंतरं पञ्चाक्षरविधानतः पञ्चाक्षरमन्त्रविधिना देवं ईश्वरम् आवाहयेत् आवाहनं कुर्यात् ॥ ९८ ॥

---

(1) पञ्चतत्त्वमयं- क

(2) त्रिंशकलो- क.

(3) मध्ये तु- ग.

(4) सकलं कृतम्- क.

(5) आवाह्य- क घ छ. ठ. त.

(6) क्षरेण मन्त्रेण- क

[ देवस्य स्थापनासन्निधीकरणे ]

षडक्षरेण[1] मन्त्रेण
स्थापयेत्तु[2] विचक्षणः ।
अष्टाक्षरेण[3] मन्त्रेण
सन्निधीकरणं[4] कुरु ॥ ९९ ॥

---

विचक्षणः मन्त्रविज्ञः षडक्षरेण मन्त्रेण अभिवृद्धिकरषडक्षरमन्त्रेण स्थापयेत् स्थापनं कुर्यात् । देवमिति शेषः । एवं संस्थाप्य अष्टाक्षरेण मन्त्रेण काम्यमन्त्रेण सन्निधीकरणं अभिमुखीकरणं कुरु कुरुष्व ॥९९॥

---

(1) पञ्चाक्षरेण- क्ष.
षडक्षरेण तु- क. ज. ढ. प. फ.

(2) येच्च- ख.
यन्तु- छ.

(3) क्षर- क.

(4) शान्त्यर्थकरणं- फ.
सन्निधिकरणं- प.
सन्निधीकारणं- ढ. द.

[ सन्निरोधनपूजने ]

**निरोधयेत्[1] नवार्णेन दशबीजेन पूजयेत्[2] ।**
**पाद्यं[3] गन्धादिकं दद्यात् ब्रह्माङ्गैः सह बुद्धिमान् ॥ १०० ॥**

---

**नवार्णेन** शांतिकमन्त्रेण **निरोधयेत्** मानसादीन् महेश्वरे निरोधयेत् । **दशबीजेन** दशाक्षरेण मन्त्रेण पुष्टिदमन्त्रेण **पूजयेत्** पूजां कुर्यात् । हृत्कमलादिस्थानेषु भावोपनीतपुष्पाद्यैः अर्चयेत् । आवाहनादिपदार्थाः- आवाहनं नाम व्यापकस्य शिवस्य एकत्र लक्ष्यमूर्तिरूपेण अभिव्यक्तीकरणम् आत्मनि मलविधारणेन चिदभिव्यक्तिः । स्थापनं नाम तस्याः चिद्व्यक्तेः आवरणाभावेन वर्तनम् । सान्निध्य नाम शुद्धात्मशिवयोः अभिमुखत्वम् । सन्निरोधो नाम मलहानेः स्वस्यात्मनः शिवे निरोधः, आदित्यसन्निधिनिविष्टचन्द्रबिम्बवत् । **बुद्धिमान्** शिवशक्त्युन्मुखीकृतत्वात् शिवार्चनायां निरतः पुरुषः **ब्रह्माङ्गैः सह** ब्रह्माङ्गमन्त्रैः सह **पाद्यं** पादोदकम्, **गन्धादिकं** गन्धादिद्रव्यम् च **दद्यात्** समर्पयेत् ॥१००॥

---

(1) निवेद्य- क. ख. घ छ ज. ट. त. थ. द.
निरोधयन्- ध.
निवेदयेत्- च. ठ ड.
निरोधनं- फ.

(2) पूजयः- क ढ. ड.
पूजय- ख. ग. घ. च. ज. ट. ठ. त.
पूरय- छ.
पूजयेः- प.
पूरयेः- द.
पूरयेत्- ब.

(3) पाद्य- ञ.

[ मूर्तिभेदेन न्यासभेदविधिः ]

सकलस्थापनाकाले तद्बीजं हृदि विन्यसेत् ।
सृष्टिमूर्तौ न्यसेत् सृष्टिं स्थितिमूर्तौ न्यसेत् स्थितिम् ॥१०१॥

संहारे संहृतिं बीजं विन्यसेत्तु विचक्षणः ।

---

सकलस्थापनाकाले महेश्वरमूर्तिप्रतिष्ठाकाले तद्बीजं रौद्रमन्त्रबीजं तासां पञ्चविंशतिमूर्तीनां हृदि हृत्सु विन्यसेत् न्यासं कुर्यात् । महेशस्य पञ्चविंशतिमूर्तयः समस्तसृष्टिस्थितिसंहाराणां कारणत्वेन प्रादुर्भूय सृष्टिमूर्तिः स्थितिमूर्तिः संहारमूर्तिः इति त्रिभेदाः भवन्ति । तस्मात् कारणात् सृष्टिमूर्तौ सृष्टिं न्यसेत् या मूर्तिः सृष्टिं करोति तस्यां मूर्तौ प्रतिष्ठाकाले सृष्टिमन्त्रबीजन्यासं कुर्यात् । स्थितिमूर्तौ स्थितिकारणविग्रहे स्थितिं न्यसेत् स्थितिमन्त्रबीजन्यासं कुर्यात् ॥१०१॥

विचक्षणः शैवक्रियाकुशलः संहारे संहारमूर्तौ संहृतिबीजं विन्यसेत्तु संहारमन्त्रबीजं विन्यसेत् । स्थापकोत्तमस्त्वाचार्यः प्रतिष्ठा-

---

(2) स्थापने- ज. ङ. फ.
स्थापन- प.

(2) मूर्तै- ट. थ.

(3) सृष्टि- क. ट.

(4) संहृतं ख
संहृतिः- ट. ड. ढ. त थ द ध. प

[ शक्तिभेदेन न्यासभेदः ]

शक्तीनां स्थापनाकाले[1] तत्तद्बीजं हृदि न्यसेत्[2] ॥ १०२ ॥

[3]मन्त्रभेदमिदं[मं] ज्ञात्वा त्वा[4]चार्यः स्थापकोत्तमः ।

[ क्रियामन्त्रयोः शरीरशरीरिभावोक्त्या पटलार्थनिगमनम् ]

क्रिया शरीरमित्युक्तं[क्ता][5] मन्त्रो[6] जीव[7] इति स्मृतः[8] । १०३ ।

---

कुशल आचार्यः इमं मन्त्रभेदं ज्ञात्वा पूर्वोक्तसमस्तमन्त्रभेदं विदित्वा शक्तीनां उमादिशक्तीनां स्थापनाकाले प्रतिष्ठकाले तत्तद्बीजं तत्तच्छक्तिबीजानि हृदि तत्तच्छक्तिमूर्तिहृदये न्यसेत् न्यासं कुर्यात् ॥१०२॥

क्रिया शरीरं इत्युक्ता शैवी क्रिया देह इत्युच्यते । मन्त्रो जीव इति स्मृतः ! मन्त्रो जीवः इत्युच्यते ॥१०३॥

---

(1) शक्तिस्थापनकाले तु- फ.
शक्तीनां स्थापने काले- ग च. ज. थ.
शक्तीनां स्थापनकाले- ड. प.

(2) तद्बीजं हृदि विन्यसेत्- झ.

(3) पद्यार्धमिदं- क. ख. घ. छ. ज. ट. ठ ड. त. थ. द. ध. प पुस्तकेषु न दृश्यते ।

(4) मन्त्रभेदं हि यो ज्ञातुमा- फ.

(5) मित्युक्तः- ङ.

(6) मन्त्र- क ग. ञ
मन्त्र- घ छ. ट. ठ. ड ढ. त. थ. द. प
मन्त्रे- फ.

(7) जीवं- क. ग. घ. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
बीज- ट. द.

(8) स्मृतम्- क. ग. घ. छ ज. ट. ठ ड. त थ. द. ध. फ.

क्रियामन्त्रप्रयोगो हि[1] शिवसान्निध्यकारणम्[2] ।
तस्माज्जीवं[3] शरीरं च ज्ञात्वा सर्वं समाचरेत्[4]
मन्त्रभेदो[5] मया[6] प्रोक्तः[7] प्रणवं च ततः शृणु[8] ॥१०४॥

इति श्री वातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थसंहितायां
मन्त्रभेदो नाम पञ्चमः पटलः

---

क्रियामन्त्रप्रयोगो हि क्रियायाः मन्त्रस्य च योगस्तु शिव सान्निध्यकारणं परमेश्वरसान्निध्यस्य हेतुः भवति । तस्मात् मन्त्रक्रिययोः जीवशरीररूपत्वात् जीवं जीवात्मकमन्त्रम्, शरीरं च शरीरात्मकशैवक्रियां च ज्ञात्वा विज्ञाय सर्वं समस्तशैवक्रियाजातन् समाचरेत् सम्यगनुतिष्ठेत् ॥

हे सुब्रह्मण्य ! मन्त्रभेदः शुद्धप्रासादादिसमस्तमन्त्राणाम् प्रभेदः मया प्रोक्तः ईश्वरेण मया कथितः । ततः तदनन्तरं प्रणवं च प्रणवभेदम् शृणु अवधारय ॥ १०४ ॥

इति श्रीवातुलशुद्धाख्यतन्त्रसहस्रग्रन्थसंहिताव्याख्यायां मन्त्रभेदो नाम पञ्चमः पटलः

---

(1) प्रयोगं हि- क ग. घ. च छ, ज. झ. ट. ठ, ड. ढ. त. थ, द. प.
(2) कारकः- फ.
(3) तस्य दीप- फ.
तस्माज्जीव- ङ. प.
(4) कर्मारभेत् बुधः- फ.
(5) भेदं- क. ग. घ च. छ. ज. झ. ट. ठ ड. ढ. त. थ. द. ध. प.
(6) इदं- क. ग. घ. च. छ. ज. ट. ठ. ड. त. थ. द. प.
अयं- झ.
इति- ध.
(7) प्रोक्तं- क. ग घ. च. छ ज ट. ठ. ड. त. थ. द.
(8) प्रणवं च तथा शृणु- प.
प्रणवं च परिशृणु- क.
प्रणवोऽथ प्रकाश्यते- फ.

# अथ प्रणवभेदो नाम षष्ठः पटलः

[ प्रणवव्याख्यानात्मकं मङ्गलम् ]

[1]उच्चारयन्ति यमिनः[2] शिवसङ्गमाय
वामादिशक्तिसहितं सकलस्य हेतुम्[3] ।

---

साकल्यादिप्रभेदेन पञ्चधा पञ्चवक्त्रतः ।
प्रसृतं प्रणवाख्यं यत् अकाराद्यक्षराञ्चितम् ॥

एकाक्षरं परं ब्रह्म शिवयोगिहृदिस्थितम् ।
सर्वमन्त्रप्राणभूतं शिवबीजमहं भजे ॥

**यमिनः** शिवयोगिनः **शिवसङ्गमाय** शिवेन साकं एकीभावरूपसम्बन्धात्मकमोक्षप्राप्त्यै **वामादिशक्तिसहितं** वामादिभिः शक्तिभिरुपेतम्, **सकलस्य हेतुं** समस्तस्यापि प्रपञ्चस्य कारणम्, देवादिजन्मविलयस्थिति-

---

(1) इदं पद्यं- ख. ञ. ड. ढ. त. थ. द. फ. पुस्तकेषु न दृश्यते ।

(2) यामिनः- ग.

(3) सकलस्य हेतुः- क.

सकलस्समेतम् - घ.

देवादि[1] जन्मविलयस्थितिभूमिभूतं[2]
उच्चारयामि हृदयं प्रणवं तथाऽऽन्तम्[3] ॥

[ प्रणवस्वरूपम् ]

अथ प्रणवभेदं तु[4] प्रवक्ष्यामि समासतः ।
सर्वपापहरं चैव मुक्तिदं परमं[5] नृणाम् ॥ २ ॥

---

भूमिभूतं देवप्रभृतीनां समस्तजनिमतां उत्पत्तिस्थितिलयकारणभूतम्, प्रणवं प्रणवाभिधं ओङ्कारमन्त्रम् यथा आन्तं उच्चारयन्ति यथा यावज्जीवं उच्चारयन्ति तथा अहमपि यावज्जीव प्रणवं हृदयं हृदयमभिव्याप्य उपांशु यथा तथा उच्चारयामि जपामि ॥१॥

अथ मन्त्रभेदकथनानन्तरं समासतः संक्षेपात् प्रणवभेदं प्रणवस्य भेदान् प्रवक्ष्यामि वदामि । कीदृशं प्रणवं इति चेत् नृणां मन्त्रोच्चारणं कुर्वतां नराणाम् सर्वपापहरं सकलपापनिर्हरणं, मुक्तिदं चैव मुक्तिप्रदायकमपि, तथा परमम् उत्कृष्टं च ॥ २ ॥

---

(1) वेदादि- क ग घ च. ज. ट. ठ. ध. प.
(2) भूत- क.
भूतां- घ. त.
भूतिं- ष.
(3) तथा तम्- क. घ. छ. ध. प.
(4) च- प.
(5) प्रणमं- छ.
प्रणवम्- त.

प्रणवं सर्वदेवाख्यं
सर्वदेवमयं विदुः ।
सर्वेषां चैव मन्त्राणां
प्रणवः[1] प्राण[2] उच्यते ॥ ३ ॥

[ प्रणवस्य पञ्चभेदाः ]

प्रणवः[3] पञ्चभेदः[4] स्यात्
तद्भेदं शृणु षण्मुख ! ।

प्रणवं ओङ्कारं सर्वदेवाख्यं शिवबीजादिसर्ववर्णानां स्वान्तर्वर्तित्वेन सर्वेषां वर्णाधिदेवानां नामधेयम्, स्वस्यापि तस्मात् कारणात् सर्वदेवाख्यं जानीयात् । सर्वदेवमयं सर्वदेवतास्वरूपं च विदुः जानन्ति । प्रणवः ओङ्कारः सर्वेषां चैव मन्त्राणां समस्तदेवतामन्त्राणामपि प्राणः प्राणस्वरूपः इति उच्यते कथ्यते ॥३॥

इदानीं प्रणवभेदो निरूप्यते— प्रणवः पञ्चभेदः स्यात् समस्तदेवतानां जन्मस्थानभूतः प्रणवः पञ्चविधो भवति । हे षण्मुख ! हे षडा-

(1) प्रणवं— क. ग. घ च. ज. ट. ड ढ. त थ द. ध. प.
(2) प्राणं - क. ग. घ. छ ज ट त. द. ध. प.
(3) प्रणवं— क ग. घ च ज. द. ध प
प्रणमं— छ. ट.
(4) भेदं - क ग. घ. च. छ ज. ट. ढ. द. ध. प.

साकल्यं शाम्भवं सौख्यं
सावश्यं[1] सायुजं तथा ॥ ४ ॥

[ एषां सदाशिवमुखोद्भूतत्वम् प्रणवाक्षराणि च ]

एते वै पञ्च भेदास्तु
पञ्चवक्त्रेषु चोद्धृताः ।
आकारश्चह्यु[उ]कारश्च
मकारश्च[2] त्रिधा भवेत् ॥५॥

---

नन ! साकल्यं साकल्यप्रणवं शाम्भवं शाम्भवप्रणवम् सौख्यं सौख्यप्रणवं सावश्यं सावश्यप्रणवं तथा सायुज्यं सायुज्यप्रणवम् इत्येवं तद्भेदं शृणु प्रणवभेदं अवधारय ॥ ४ ॥

एते वै पञ्चभेदास्तु पूर्वोक्ताः साकल्यादिसायुज्यान्ताः पञ्चप्रणवभेदाः पञ्चवक्त्रेषु चोद्धृताः सदाशिवस्य पञ्चवक्त्रेभ्यः विनिर्गताः । अयं च प्रणवः अकारश्च उकारश्च मकारश्च त्रिधा भवेत् अकारः उकारः मकारश्चेति वर्णत्रयात्मको भवति ॥५॥

---

(1) सायुज्यं- क ढी द.
सयुजं- घ.

(2) अकारं च उकारं च मकारं च- क. ग. छ. ट. त. थ. द. ध. प.

त्रितयान्तर्गतं[तो] नादं[दः] चतुर्थं[र्थो][2] मुक्तिकारणम् ।

[ प्रणवाक्षरस्थाननिर्देशः ]

अकारो[3] दक्षिणांशः स्यात् वामांशः स्यादुकारकः[4] ॥ ६ ॥

मकारो[5] मध्यदेशः[6] स्यात् तस्मात् त्रिः[7] प्रणवात्मकम् ।

---

त्रितयांतर्गतः एतेषां अकारोकारमकाराणां अंतर्गतत्वेन वर्तमानः मुक्तिकारणं कैवल्यनिमित्तभूतः नादः शुद्धशिवाक्षरभूतो हकार एव चतुर्थः चतुर्थवर्णो भवति । अथ प्रणवस्वरूपं निरूपयति— अकार इति । तस्य प्रणवस्य अकारः दक्षिणांशः स्यात् अवर्णः सव्यभागो भवति । उकारकः उकारः वामांशः स्यात् वामभागो भवति ॥६॥

मकारः मध्यदेशः मध्यभागः स्यात् भवति । तस्मात् त्रिः अकाराख्यब्रह्मबीजम्, उकाराख्यब्रह्मबीजं, मकाराख्यब्रह्म-बीजं चेति एतत्-त्रयमपि मिलित्वा प्रणवात्मकं प्रणवस्वरूपं

---

(1) तृतीया- ख. ग. घ च. छ. ज झ. ट. ठ. ड. ढ. त थ द. प फ.

(2) चतुर्थं- क ट. ञ. ढ. त. द.

(3) अकारं- फ. घ. छ. ज. ट. ढ. त. थ. द. ध.

(4) दक्षिणाङ्गं स्याद्वामाङ्गं स्यादुकारकम्- ध.
दक्षिणांशः स्याद्वामांशः स्यादुकारकम्- क. ग. घ. च छ. ज. ट. ठ. त थ. द प

(5) मकारं- क. ग. घ. च. छ. ज. ट ठ त. द. ध.

(6) देहं- क घ. ट. ढ. त. द. धं. प.

(7) त्रि- क. ख. घ. छ. ज. ट ढ त थ. द.

(8) प्रथमा- क्षः

हकारस्तस्य[1] मध्ये तु संस्थितः[2] सर्वकारणम् ॥७॥

[प्रणवस्य पञ्चदेवतात्मकत्वम्]

अकारं[3] ब्रह्मदैवत्यं उकारं[4] विष्णुदैवतम्[5] ।
मकारं[6] रुद्रदैवत्यं ओङ्कारं[7] तु सदाशिवम्[8] ॥८॥

---

भवति । तस्य मध्ये तु तस्य प्रणवस्य मध्ये तु सर्वकारणं समस्तानां कारणभूतः हकारः शिवबीजात्मकहवर्णः संस्थितः तिष्ठतीत्यर्थः ॥ ७ ॥

अकारं ब्रह्मदैवत्यं अवर्णं ब्रह्मदेवताकम्, उकारं विष्णुदैवतं उवर्णं विष्णुदेवताकम्, मकारं रुद्रदैवत्यं मवर्णं रुद्रदेवताकम्, ओङ्कारं तु सदाशिवं ओमिति वर्णं तु सदाशिवदेवताकम्– ॥८॥

---

(1) हकारं तस्य– क. ग. घ. च. छ. ज. ट त. थ द ध. प.

(2) संस्थितम्– क. ग. घ. च. छ. ज झ. ट ठ. ड. ढ त. थ. द. ध. प. फ.

(3) अकारो– ख. झ.

(4) उकारो– ख. झ.

(5) देवतः– क.

(6) मकारो– ख. झ.

(7) ओङ्कारः– ख. झ.

(8) सदाशिवः– ख. झ.

नादं शिवमयं विद्यात्[1] पञ्चदेवात्मकं[2] विदुः ।

[ प्रणवस्य ब्रह्मस्वरूपतत्वम् ]

अकारोकारसंयोगात् ओंकारः[3] स्वर[4] उच्यते ॥ ९ ॥

ओमित्येकाक्षरं ब्रह्म[5] वदन्ति[6] सर्वयोगिनः[7] ।

---

नादं नादाख्यहकारम्, शिवमयं शिवदेवताकं विद्यात् जानीयात् । इत्थं प्रणवं पञ्चदेवात्मकं ब्रह्मादिपञ्चदेवतारूपम् विदुः जानन्ति । अकारोकारसंयोगात् अवर्णो वर्णसंयोगात् सञ्जातः ओंकारः ओवर्णः स्वरः उच्यते स्वरवर्णः इति कथ्यते ॥९॥

सर्वयोगिनः सर्वेऽपि ब्रह्मध्याननिरताः ओमित्येकाक्षरं अ. उ. म. ह. ओ एतेषां समुदायं ओंकारात्मकं एकाक्षरम्, ब्रह्म परब्रह्मेति वदन्ति कथयन्ति । इदानीं साकल्यप्रणवोद्धारः कथ्यते– पञ्चममिति । पञ्चम स्वरवर्गे पञ्चमबीजभूतम् उवर्णम्, प्रथमोपेतं अकारेण सहितं उद्धरेदिति शेषः । ततः परं पराख्यहवर्णं तृतीयान्तगतं तृतीयाख्य-मकारस्य मध्यस्थितं उद्धरेदिति शेषः । अत्र मकारान्तर्गतहकारोद्धारादेव

---

(1) विन्द्यात्– क. घ. ट ठ. त. थ. द. ध.

(2) वेदात्मकं– ट.

(3) ओङ्कारः– छ. थ.

(4) स्वरं– क. घ छ. झ. ट. ठ. ड ढी थ. द ध. प. फ.

(5) ब्रह्मा– क

(6) वदन्ते– क. घ. छ ज. ट. ठ. त. द

(7) शिवयोगिनः– ख. ग च. ज. झ ड. ध. फ

[ साकल्यप्रणवोद्धारक्रमः ]

पञ्चमं प्रथमोपेतं तृतीयान्तर्गतं परम् ॥ १० ॥
साकल्यमिति विज्ञेयं[1] पूर्वव[क्त्रात्तु]क्त्रे तु जायते ।
[2]आदिबीजं चतुर्थान्तं[3] भान्तं[4] भूतान्तसंयुतम्[5] ॥ ११ ॥

---

मकारोप्युद्धृतो भवति । एव च– अ. उ. म. ओ. इति चत्वारि बीजानि भवन्ति । हकारस्तु मकारान्तर्गतो वर्तते ॥ १० ॥

साकल्यमिति विज्ञेयं अ-उ-म-ओ इत्येतच्चतुरक्षरेण सह वर्तमानं हकाराख्यशिवबीजमेव साकल्यमिति वेदितव्यम् । पूर्ववक्त्रात्तु जायते एतत्साकल्यं सदाशिवभट्टारकस्य पूर्ववक्त्रात् प्रादुर्भवति । शिवस्य सदाशिवाभिधानवत् प्रणवब्रह्मणः साकल्याभिधानं कृतमिति निश्चितम् । इदानीं शाम्भवप्रणवोद्धारः कथ्यते-- आदीति । आदिबीजं अकारम्, चतुर्थान्ते उकारम् भूतान्तसंयुतं हकारसहितम् भान्तं मकारं च उद्धृत्य– ॥११॥

---

(1) साकल्याख्यमिति ज्ञेयं- क. छ.

(2) 'आदिबीजं' इत्यारभ्य 'शाम्भवं दक्षिणाननात्' इत्यन्तो भागः– क. घ. त. थ. पुस्तकेषु न वर्तते ।

(3) कलादिपञ्चमं चैव– ध.
आदिबीजं चतुर्थ्यन्तं– ग. च. ज.
आदिबीजं च तुर्यं च– छे. ट. ठ. द.
आदिबीजं च तुर्यान्त– झ.

(4) भान्तं– प.

(5) संयुक्तम्– छ.
अनिलान्तं समुद्धरेत्– ध.

चतुर्थ[1]स्वरसंयुक्तं शाम्भवं दक्षिणानने[नात्][2] ।

[ सौख्यप्रणवोद्धारक्रमः ]

वर्गादि पञ्चमं चैव षष्ठान्तं[3] जीवसंयुतम् ॥ १२ ॥

तृतीयस्वरसंयुक्तं सौख्यं वै पश्चिमानने[नात्] ।[4]

---

चतुर्थस्वरसंयुक्तं ईकारसहितं कुर्यात् । एवं चेत्- अ. उ. म. ह. ई इति पञ्चाक्षराणि संभूय शाम्भवं शांम्भवप्रणवः भवति । एष प्रणवः दक्षिणाननात् दक्षिणवक्त्रात् जायते इति शेषः । इदानीं सौख्यप्रणवोद्धारः कथ्यते- वर्गादीति । वर्गादि अकारं पञ्चमं चैव उकारं चैव जीवसंयुतं हकारसहितम् षष्ठान्तम् षष्ठवर्गस्यांतिममकारं च उद्धृत्य ॥ १२ ॥

तृतीयस्वरसंयुक्तं इकारसहितम् , कुर्यादिति शेषः । एवं चेत्- अ-उ-म-ह इ इति बीजानि भवन्ति । इमानि च संभूय सौख्यं वै सौख्यप्रणवो भवति । एष प्रणवः पश्चिमाननात् सदाशिवस्य पश्चिम-वक्त्रात् जायते इति शेषः । इदानीं सावश्यप्रणवोद्धारः कथ्यते-

---

(1) द्वादश- ठ. भ.
पञ्चम- छ ट ढ.
पञ्चम- ठ द.
(2) दक्षिणाननम्- झ.
(3) मकारो- झ
(4) पश्चिमाननम्- झ.

[ सावश्यप्रणवोद्धारक्रमः ]

अकारं पञ्चमं चैव[1] मकारं[2] तत्त्वबीजकम् ॥ १३ ॥

एकादशकलोपेतं सावश्य[3] सौम्यवक्त्रके [कात्] ।

[ सायुज्यप्रणवोद्धारक्रमः ]

आदिप्रकृतिवर्णं च पञ्चमं च[4] मकारकम्[5] ॥ १४ ॥

---

अकारं अवर्णं पञ्चम चैव उवर्णं मकारं मवर्णं तत्त्वबीजकं हकारं च उद्धृत्येति शेषः ॥ १३ ॥

एकादशकलोपेतं एकारसहितं कुर्यात् । एवं च अ-उ-म-ह ए इति भवति । सावश्यं पूर्वोद्धृतानि अकारादिबीजानि सम्भूय सावश्याख्य-प्रणवो भवति । अयं च प्रणवः सदाशिवस्य सौम्यवक्त्रकात् उत्तराननात् जायते इति शेषः । इदानीं सायुज्यप्रणवोद्धारः कथ्यते- आदीति आदिप्रकृतिवर्णं च अकारं पञ्चमं च उकारम्, मकारकं मका-रम्- ॥ १४ ॥

---

(1) पञ्चमान्तं च- क ख ग घ. च. छ. ज. ट. ठ. ड. थ. द. ध. प.

(2) ककारं- घ

(3) सावन्यं- घ

(4) पञ्चमान्त- द. ध.

पञ्चमान्तं- क. ख. ग घ च. छ. ज. ट ठ ड. ढ. त, थ. प. फ

(5) षडात्मकम्- क.

षड्ङ्गकम्- घ.

षडान्तकम्- छ.

षडन्तकम्- ख ग घ छ ज ट. ठ. ड ढ. त थ प. फ.

गुह्यं[1] चतुर्दशोपेतं सायुज्यं चोर्ध्ववक्त्रके[कात्] ।

[ साकल्यप्रणववर्णादिः ]

साकल्यं रक्तवर्णं स्यात् छन्दोनुष्टुप् प्रकीर्तितम्[2] ॥ १५ ॥

ऋषिः नत्कुमारस्तु

पार्थिवं भूतमुच्यते[3] ।

---

गुह्यं हकारं च उद्धृत्य, चतुर्दशोपेतं औकारसहितं कुर्यात् । एवं-चेत् अ-उ-म-ह-औ इति भवति । एतानि बीजानि सम्भूय सायुज्यं च सायुज्याख्यप्रणवो भवति । अयं च प्रणवः सदाशिवस्य ऊर्ध्ववक्त्रकात् ऊर्ध्वमुखात् जायते । पञ्चप्रणवभेदमुक्त्वा इदानीं तेषां प्रणवभेदानां वर्ण-च्छन्दो-ऋषि- भूत-तत्त्व-अधिदेव-मात्रासंख्याश्च निरूप्यन्ते–साकल्यमिति । साकल्यं रक्तवर्णं स्यात् साकल्यप्रणवः रक्तवर्णो भवति । छन्दः अनुष्टुप् प्रकीर्तितम् अस्य साकल्यप्रणवस्य अनुष्टुप् छन्दः कथितम् ॥१५॥

सनत्कुमारस्तु ऋषिः सनत्कुमारनामा ऋषिर्भवति । पार्थिवं भूतमुच्यते पृथिवीभूतम् भवति । तत्त्वं कर्मेशः इत्युक्तं कर्मेशः

---

(1) गुह्य– त

(2) प्रकीर्तितः– ग. ठ. ड. ढ. फ.

(3) बीजमुच्यते– ध.
भूतमीरितम्– झ.

तत्त्वं कर्मेश[1] इत्युक्तं[2]
ईशानश्चा[3]धिदैवतम् ॥ १६ ॥

[4]चतुर्मात्रासमायुक्तं[5] सर्वसिद्धिकरं परम् ।
[ शाम्भवप्रणववर्णादिः ]
शाम्भवं[6] त्वञ्जन[7]प्रख्यं त्रिष्टुप्छन्दः प्रकीर्तितम् । १७ ।

---

तत्त्वं भवति । ईशानश्चाधिदैवतं इशानः अधिदेवता भवति । कर्मेशस्य ईशान इति पर्यायनाम ॥१६॥

चतुर्मात्रासमायुक्तं चतसृभिः मात्राभिः सहितं भवति । सर्वसिद्धिकरं परं सकलाभिलषितसिद्धिः परमं प्रयोजनं भवति । इदानीं शांभवप्रणवस्य वर्णादिकमुच्यते— शांभवं तु इति । शांभवं तु अञ्जनप्रख्यं शांभवप्रणवः अञ्जनशिलावर्णः भवति । अञ्जनशिलावर्णस्तु कृष्णः । छन्दः त्रिष्टु् प्रकीर्तितम् अस्य प्रणवस्य छन्दः त्रिष्टुप् इत्युक्तम् ॥ १७ ॥

---

(1) तत्त्वं कर्मेशं— क. ख. ग. घ. च. छ. ज. त. द. ध.
कर्मेशं तत्त्वं— प.
(2) इत्युक्तः— ढ.
(3) ईशानं चा— क. घ छ ज. ट ठ. ढ. त. थ. द. ध. फ.
(4) पद्यार्धमिदं 'च' पुस्तके न दृश्यते ।
(5) मात्राचतुर्भिस्संयुक्तं— ख. घ. ज. ट. द ध.
मन्त्रं चतुर्भिस्संयुक्तं— ग च.
मात्रं चतुर्भिस्संयुक्तं— ठ प.
मात्रां चतुर्भिस्संयुक्त— क. ढ.
मात्राश्चतुभास्संयुक — त. थ.
(6) शाम्भव— ध.
(7) त्वञ्जनं— त.

भारद्वाज[1] ऋषिर्ज्ञेयः[2] सलिलं भूतमुच्यते[3] ।
तत्त्वं कर्तृ समाख्यातं ईश्वरस्त्व[4]धिदैवतम् ॥ १८ ॥

पञ्चमात्रा[5]समोपेतं सर्वसिद्धिप्रदायकम् ।

[ सौख्यप्रणववर्णादिः ]

सौख्यं[6] गोक्षीरवर्णं स्यात् बृहती छन्द ईरितम्[7] ॥ १९ ॥

---

**भारद्वाज ऋषिः ज्ञेयः** अस्य शांभवप्रणवस्य भारद्वाजः ऋषिरिति ज्ञातव्यः । **सलिलं भूतमुच्यते**– अस्य शाम्भवप्रणवस्य जलं भूतमित्यभिधीयते । **तत्त्वं कर्तृ समाख्यातं** कर्तृसादाख्यं तत्त्वं भवति । **ईश्वरस्तु अधिदैवतं** ईश्वराख्यमूर्तिः अधिदेवता भवति ॥ १८ ॥

**पञ्चमात्रासमोपेतं** पञ्चभिः मात्राभिः सहितम् भवति । **सर्वसिद्धिप्रदायकं** सर्वाभिलषितार्थप्राप्तिः अस्य प्रयोजनं भवति । इदानीं सौख्यप्रणवस्य वर्णादिकमुच्यते– **सौख्यमिति** । **सौख्यं गोक्षीरवर्णं स्यात्** सौख्यप्रणवः श्वेतवर्णः भवति । **बृहती छन्द ईरितं** बृहती छन्दः भवति ॥ १९ ॥

---

(1) भारद्वाजो– क. ख. ग. ट. त. द. ध. प.
(2) ज्ञेयं– क. घ.
(3) मीरितम्– झ.
(4) ईशानं स्व– ख. च. प.
(5) चतुर्मात्र– ध.
(6) सौख्य– ध.
(7) छन्दो बृहतिरिष्यते– ख. (पा). ग. च. ज. ट. ठ. ढ. भ.
छन्दो बृहतिरुच्यते– क घ. छ. ट. त. द ध. प

विश्वामित्र ऋषिः ज्ञेयः[1] तेजो भूतमिति स्मृतम् ।
समूर्तं[2] तत्त्वमित्युक्तं ब्रह्मेशस्त्वधिदैवतम्[3] ॥ २० ॥

चतुर्मात्रा[4]समायुक्तं सर्वसम्पत्करं परम् ।

---

विश्वामित्रः ऋषिः ज्ञेयः विश्वामित्रः ऋषिरिति ज्ञातव्यः । तेजो भूतमितिः स्मृतं तेजस्तु भूतमित्युच्यते । समूर्तं तत्त्वमित्युक्तं मूर्तसादाख्यं तत्त्वं भवति । ब्रह्मा तस्याधिदैवतं सौख्यप्रणवस्य पञ्चमूर्तिमध्योक्तः ब्रह्मेशः अधिदेवता भवति ॥२०॥

चतुर्मात्रासमायुक्तं अयं सौख्यप्रणवः मात्राचतुष्टयोपेतो भवति । सर्वसम्पत्करं परं अस्य समस्तैश्वर्यप्राप्तिः परमं फलम् । इदानीं सावश्य प्रणवस्य वर्णादिकमुच्यते— सावश्यमिति । सावश्यं कुङ्कमाभं स्यात् सावश्य-

---

(1) ज्ञे – क. ध.

(2) समूर्ति– क. ज.
समूर्तं च– ढ.
अमूर्तं – थ.

(3) ह्मा तस्याधिदैवतम्– ध.
तस्याधिदैवतं ब्रह्मा– ढ.
ब्रह्म तस्याधिदेवता– ज.

(4) पञ्चमात्रा– ध.

[ सावश्यप्रणववर्णादिः ]

सावश्यं कुङ्कुमाभं[1] स्यात् जगती छन्द ईरितम्[2] ॥ २१ ॥

गौतमोऽस्य[3] ऋषिर्ज्ञेयः[4] मारुतं[ता] भूतमुच्यते[5] ।
अमूर्तं[6] तत्त्वमित्युक्तं ईशस्तस्याधि[7]दैवतम् ॥ २२ ॥

---

प्रणवः रक्तवर्णो भवति । छन्दः जगती ईरितं अस्य जगती छन्दः भवति ॥ २१ ॥

गौतमोऽस्य ऋषिः ज्ञेयः अस्य सावश्यप्रणवस्य गौतमः ऋषिः ज्ञातव्यः । मारुतो भूतमुच्यते वायुः भूतमित्यभिहितः । अमूर्तं तत्त्वमित्युक्तं अमूर्तसादाख्यं तत्त्वमित्यभिहितम् । ईशस्तस्याधिदैवतं ईशः तस्य अधिदेवता भवति ॥ २२ ॥

---

(1) कुंकुमाभः- ध
(2) छन्दो जगतिरुच्यते- क. ख (पा). ग. च ज. ट. ड थ. ध. प.
जगती छन्द ईरितः- झ.
(3) गौतमो हि- ठ.
गौतमश्च- थ
गौतमस्तु- द.
(4) ज्ञेय- क.
(5) सीरितम्- झ.
(6) अमूर्ति- क.
(7) ईशस्तत्त्वाधि- थ. ध.
ईशतत्त्वाधि- घ. ट. त थ.

पञ्चमात्रासमोपेतं सर्ववश्यकरं परम् ।

[ सायुज्यप्रणववर्णादिः ]

[1]सायुज्यं स्फटिकाभासं[2] छन्दो वै जगती स्मृतम्[3] ॥२३॥

---

पञ्चमात्रासमोपेतं पञ्चभिः मात्राभिः सहितं भवति । सर्व वश्यकरं परं सर्ववशीकरणं चास्य प्रणवस्य परमं प्रयोजनम् । इदानीं सायुज्यप्रणवस्य वर्णादिकं कथ्यते– सायुज्यमिति । सायुज्यं स्फटिकाभासं सायुज्यप्रणवः श्वेतवर्णः भवति । छन्दो वै जगती स्मृतं छन्दः जगती इति स्मर्यते ॥२३॥

---

(1) 'सायुज्यं' इत्यारभ्य 'सर्वाभीष्टफलप्रदम्' इत्यन्तो भागः– क. घ. त. थ. पुस्तकेषु न दृश्यते । परं तु तत्स्थाने– श्लोकद्वय ख. पुस्तके दृश्यते । यथा–
सायुज्यं शुद्धपीतं स्यात् गायत्री छन्द उच्यते ।
नारदोऽस्य ऋषिर्ज्ञेयः आकाशं भूतमुच्यते ॥
शिवसादाख्यमेवोक्तं सदाशिवोऽधिदैवतम् ।
पञ्चमात्रासमोपेतं सर्वकाम्यप्रदं महत् ॥" इति ॥

(2) स्फटिकाभं स्यात्– झ.
स्फटिकप्रख्यं– घ.
स्फाटिकाभासं– च

(3) जगती छन्द ईरितम्– क. ख. घ. छ. झ. ट. ड. ढ. त. थ. ब फ.

अगस्त्योऽस्य ऋषिर्ज्ञेयः व्योम भूतमुदाहृतम्[2] ।
शिवाख्यं[3] तत्त्वमित्युक्तं अधिदैवं[4] सदाशिवः[5] ॥ २४ ॥

पञ्चमात्रासमोपेतं सर्वाभीष्टफलप्रदम्[7] ।

---

अगस्त्योऽस्य ऋषिर्ज्ञेयः अस्य अगस्त्यः ऋषिरिति ज्ञातव्यः । व्योम भूतमुदाहृतं आकाशं भूतमिति कथितम् । शिवाख्यं तत्त्वमित्युक्तं शिवसादाख्यं अस्य तत्त्वमिति कथितम् । अधिदैवं सदाशिवः सदाशिवः अधिदेवता भवति ॥ २४ ॥

पञ्चमात्रासमोपेतं पञ्चभिः मात्राभिः सहितं भवति । सर्वाभीष्टफलप्रदं सर्वाभिलाषितार्थसिद्धिः अस्य प्रयोजनं भवति । सर्ववर्णानां

---

(1) अगस्त्योऽत्र– क. ग. घ. च. ज. झ ड. ढ. त. थ द प फ.
कश्यपोऽस्य– छ.

(2) आकाशं भूतमुच्यते– धं.

(3) अमूर्त– ध.
सादाख्य– झं.

(4) अधिदैवः– ज. ट. प.

(5) सदाशिवम्– क. ख. घ. झ. ठ. ड. ढ. त. थ. द. फ.

(6) समायुक्त– क. घ. झ. ठ. ड. ढ त. थ. फ.

(7) सायुज्यपदमाप्नुयात्– क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ.
त. थ द प फ.

[ वस्तुतो हकारस्यैव प्रणवत्वम् ]

प्रणवः[1]सर्ववर्णानां शिवबीजमुदाहृतः[2] ॥ २५ ॥

[ ब्रह्मात्मकप्रणवजपावश्यकता ]

विन्दुनादप्रकारेण प्रणवाकृतिरुच्यते[3] ।
सृष्टि(ष्ट)स्थितिनिमित्ताय चोच्चारणमधोमुखम्[4] ॥ २६ ॥

---

पूर्वश्लोकोक्तानां प्रणवाङ्गभूतानां सर्वेषां वर्णानां शिवबीजं हकारः प्रणवः उदाहृतः प्रणवः शिवबीजाख्यहकार एव प्रणवः इत्यभिधीयते ॥ २५ ॥

विन्दुनादप्रकारेण समस्तवर्णानां नादब्रह्मणश्च शिवशक्तिप्रकारतः प्रणवाकृतिरुच्यते प्रणवाकारोऽभिधीयते । सृष्टस्थितिनिमित्ताय उद्भूतानां शरीरादीनां स्थितिसिद्धये अधोमुखं अधोमुखहृदयममिव्याप्य उच्चारणं ब्रह्माह्वययुक्तप्रणवोच्चारणम् सर्वे मुमुक्षवः कुर्युरिति शेषः ॥ २६ ॥

---

(1) प्रणवं- क. ग घ. च ज झ. ट. ठ ड. ढी त. थ. द. ध प. फ

(2) शिवबीजमुदाहृतम्- क. घ. छ. ट. ठ. ढ. त. थ. द ध. प.
शिवबीजमिति स्मृतम्- झ.

शिवबीजमिति स्मृतः- ख.

(3) प्रणमाकृतिमुच्यते- छ ठ. ढ. ध.
प्रणवाकृतिरीरिता- ञ

(4) चोच्चारणमथो मुखम्- च.

उच्चारणमधोमुखम्- ब.